# ग्रन्थरत्नमाला

कृष्णकविविरचिता

# रघुनाथविजयचम्पूः ।

श्रीगणेशं वन्दे ।

अव्यादव्याजदीव्यद्गुरुतरकरुणाम्भोधिरिङ्गत्तरङ्ग-
श्रेणीप्रोरिक्षसद्दिव्यामृतमतिकलितात्यन्तहस्तावलम्बम् ॥
शेषाद्रीशस्य नित्यं वदनविधुकनच्चन्द्रिकासान्द्ररोचि-
र्दत्वा साम्राज्यलक्ष्मीं स्मितमिह रघुनाथाख्यभूपालमौलिम् ॥ १ ॥

काप्यागच्छति मामकीनभवनं त्रैलोक्यसंमोहिनी-
मेनां द्वारि न मुञ्चतात्र विदितं गोपीविटत्वं हरेः ॥
श्रुत्वेत्थं गदितं श्रिया प्रतिसखीर्यन्मोहिनीरूपभाक्
चक्रे तद्रघुनाथभूपमवतां नित्यं मुरारेः स्मितम् ॥ २ ॥

शुम्भत्संरम्भसम्भावितदितिजमदारम्भकुम्भीन्द्रकुम्भा-
लम्भारम्भोग्रदम्भः कटुविकटरदस्तम्भसम्भूतजृम्भः ॥
संभिन्नस्तम्भसीमासुरभयमहरद्यः कृपाकेलिसीमा
भीमानीरातटाकस्थितिरिह रघुनाथक्षितीन्द्रं स पायात् ३

कन्तुर्मे क गतोद्य रुक्मिणि हरे हृद्येव जागर्त्यसौ
सत्यं ते वचनं यदद्य हृदि ते जागर्ति कन्तुद्वयम् ॥

---

१ श्रीवेङ्कटेशस्य । २ कन्तुर्मदनः ।

गृह्णन्नित्यचिरात्कुचद्वयमये कामो हृदीतीरितं
मैवं भूरत एव चेष्टितमिति श्लिष्यन्सतां पातु वः ॥४॥
कल्याणार्थं समानयति रघुनाथावनिपतिः
स्वमूर्ध्नीति प्रायो निजचरणभक्तस्य चरितम् ॥
स्फुटीकर्तुं बिभ्रच्छिरसि शशिनं शेखरमणिं
प्रियो दाक्षायिण्याः श्रियमिह विधत्तां कृतिपतिः ॥५॥
सदानन्दीड्यश्रीरजतधरसद्मा सुमनसां
प्रमोदार्थं हेमाचलमभिदधच्चापमनघम् ॥
कुमारश्रीवीक्षामुदित इह जैवातृकशिरो-
मणिः पायाद्रूपं सपदि रघुनाथं स्वसदृशम् ॥ ६ ॥
श्रीवासव्रहातन्त्रादिमपदपरकालार्यवर्यानिधाङ्घ्रि-
द्वन्द्वावानुग्रहात्तत्प्रतिपदविविधग्रन्थनिर्माणशक्तिः ॥
श्रीमत्प्रत्यग्रदुर्गास्थितिरिह तनुते संमतं सन्मतीनां
नव्यं काव्यं सुभव्यं मितमतिललितं कृष्णनामा कवीन्द्रः ७
श्रीमन्तः परिपूर्णसद्गुणगणाः प्रख्यातवादान्यका
ये भूपा विलसन्ति तान्यदि कविः संवर्णयेत्के चन ॥
निन्दन्स्वेनमसूयया नरमयं स्तौतीति तत्रोत्तरं
ना विष्णुः पृथिवीपतीति वचनं तत्स्यात्कथं स्तुतिः ८॥
तादृशकविताभावात्सुकवेः कवितां विनिन्दतात्कुकविः ।
निन्दतु पुरूषेणाविः परवनितां सुन्दरीं क्षतिः कास्याः ॥९।

निर्व्याजवत्सलहृदामुर्व्यां द्विगुणापि लाल्यतामेति ॥
कतिचयाणां कीर्तिरियमविचारोक्तिर्हि लाल्यते सर्वैः ॥ १० ॥
पञ्चवटीनिकटे भुवि चञ्चलनयना विहाररतिभूमिः ॥
विन्ध्रूरभिधा विलसति चञ्चल्लक्ष्मीः पुरी निरीतिरियं ११ ।

यस्यां सदा पुरि महच्छविदेहलीला-
लाल्या रघूत्तमपती तुलनां नितान्तम् ॥
गेहावलिश्च दधते ललनाश्च साम्यौ
वैतानभूपितनया च मनोहराभाः ॥ १२ ॥
यत्र मनोजवसत्त्वं दधते राजन्यसमुदयाः पुन्याश्च ॥
आजानेया रुचिरा ललना अपि यौवनारूढाः ॥ १३ ॥
यत्र स्त्रीणां मध्यमं मध्यमत्वं
त्यक्तुं नष्टायः शिरःस्थितमात्रम् ॥
अप्राप्यालं खेदतः कार्श्यमाप
प्रायो न स्याद्गौरवं मध्यमानाम् ॥ १४ ॥
यद्वानारसथाग्रभूमिषु नरैर्निद्रालसैर्यामिकैः
रौप्यां मार्गवशाद्दवालविवरे गच्छन्कदाचिद्विधुः ॥
यच्छामांशायितैरिदं प्रतिहतो दण्डेन नूनं न चे-
त्कस्मान्मण्डलमध्यमुन्यानितरां धत्ते किणं स्यात्तदा १५ ॥

१ नित्यं गौतिवती वतिह्वेत्यर्थः । २ मनोजो मदनस्तस्य वनत्वं वसतिः : अथवा मनोजवसत्त्वं मनोजतिवेगवत्त्वम् । ३ कुलीनाः उत्तमजातयुक्ताश्वाः । ४ स्वादिमताम् ।

यत्कान्ताकान्तिचौर्योदितकुतुकतया जालरन्ध्रप्रविष्टो
रात्रौ सौधे प्रबुद्धैः सपदि निगलितासीविदेहैः सुधांशुः ॥
आदातुं या अशक्तो निजरिपुललनावक्त्रवीक्षात्तभीति-
स्तत्रात्याक्षीन्नु मुक्ता इति हि दधति ता नाम तारास्तदेव ॥१६॥

तामिह रघुनाथनृपः पालयति गुणैर्गरीयसीं नगरीम् ॥
तेन पुरी साचोध्याभिख्यां न वहेत कथमिह धरिण्याम्॥१७॥

पञ्चवटीरम्यत्वं स्मृत्वास्मृत्वाधुना स तत्रैव ॥
नगरीं निर्माय निजामास्ते रघुनाथ इतीयमभिदधते ॥ १८॥

तत्ताद्दक्षमहादशाननकथादिकारविश्राणना
प्रागल्भ्योल्लसिताखिलाप्रसुमनोहर्षा लसद्धर्मभाक् ॥
उल्लासं दधती सदा मनसि वैदेह्युक्तिकाकर्णने
व्यक्तिः सा रघुनाथनाममहिता न स्यात्कथं वा भुवि १९

यस्य च सहधर्मचरी स्थिरात्मजातात्यनर्घगुणभूमा ॥
जनकान्वयमोदकरी जयतितरां जानकीदेवी ॥ २० ॥

चन्द्रशेखरधर्माभिवर्धनं पतिमीयुषी ॥
जानकी रघुनाथं स्यान्नसानन्तात्मजा कथम् ॥ २१ ॥

ऊर्मिलानन्दलहरीसंदायिगुणभूषिता ॥
श्रुतिकीर्त्यग्रगा लोके यैषा विजयतेतराम् ॥ २२ ॥

---

१ भर्तेः 'मालदार' इत्यादपाठः । २ रघुनाथपक्षे वैदेहीतिच्छेदः । ३ जनकः पिता जनकराजा च । ४ अनन्तो जानकीतिनाम पक्षे अनन्ता पृथ्वी । ५ ऊर्मिलोर्मिलायन । लक्ष्मणस्त्री च ।६ श्रुताः कीर्तयो यासां तासामग्रगा पुरे र्वामनांवा । श्रुतकीर्तिः शत्रुघ्नस्त्री ।

सिद्धार्थो विजयान्वितश्च सचिवो दृष्ट्यन्वितोयन्मुदं
पुष्णाति प्रचुरामशोककलितः सन्मन्त्रपालः सदा ॥
बुद्धिः श्लाघ्यसुमन्त्रदत्तहृदयो नित्यं जयन्तं पुरः
कुर्वन् भूतलमर्थसाधकहितो यः पालयन्नेधते ॥२३ ॥

खरदूषणपारुष्यासहनं च श्लाघ्यता जनस्थाने ॥
अपि च जलध्युद्बन्धनचातुर्यं नाद्भुतं विभोरस्य ॥ २४ ॥

सक्ता विष्णुपदे यदीयजननी संसिद्धितः पावनी-
यां प्रीतिं दधतीं च शंतनुमतां प्राहुर्घनाः सज्जनाः ॥
या रक्तां च सरस्वतीं परिचिनोत्यादित्यजातादरा
गङ्गाम्बा स हि भीष्म एव समरे न स्यात्कथं भूपतिः२५

यद्यपि गङ्गातनुजस्तदपि विशेषोऽस्ति यदिह राज्यसुखम् ॥
सह धर्मिण्या साकं स महीपालो भुनक्तीति ॥ २६ ॥

संप्राप्तचन्द्रभागो यशसा यः पुण्डरीकवरद इति ॥
ख्यातः स विठ्ठलमहीनेता यस्याऽभवत्तातः ॥२७ ॥

बहुशस्तं भजतामिह कल्पुतमतिश्रियं ददन्ति जनाः ॥
यस्य पितामहमवनौ नरसिंहेन्द्र इतिसार्थनामानम् ॥ २८ ॥

मत्स्याद्यवतारेषु श्रीरघुनाथानुजन्मता विदिता ॥
कृष्णस्येति स्फुटयति नूनं यस्यानुजश्च कृष्णविभुः ॥ २९ ॥

---

१ खराणि तीक्ष्णानि दूषणानि तेषां पारुष्यं कठोरत्वम् । पक्षे खरदूषणौ रक्षसौ । २ जनस्थाने लोकेषु । पक्षे जनस्थानं खरदूषणनिवासस्थानविशेषः । ३ विष्णुपदे आकाशे विष्णोः पदे च । ४ कमलानन्ददः । पक्षे विठ्ठलभक्त विशेषः ।

श्रीमान्पोषितधर्मजातविजयो नित्यानिरुद्धाधिका(क')-
प्रद्युम्नप्रचुरोधिकंसरसहृद्देवः सुभद्रान्वितः ॥
विख्यातो वसुदेवनन्दनतया सत्कामपालादरः
कृष्णाख्यां न कथं वहेत नितरामक्रूरसेव्यो विभुः ३०॥

नवनीतहृन्महोपलभावशर्कटकादिदाननिपुणपदः ॥
माधवविभुरिति सार्थाभिख्यो यस्यानुजोस्त्यन्यः ॥ ३१ ॥

वाचस्पतिरिव वक्ता सभासु यश्चोत्तरोत्तरायुक्तीः ॥
चित्रमिदं मौनान्वयसमाश्रितः सर्वदैव राजेति ॥ ३२ ।

अपि चास्मिन्विस्मापनीयचरितानिरताविविधनरपतिकुलतिलकमुकुटलसदरुणमणिपटलगलदमलघृणिमसृणितमुखादिनविगमसमयभवदरुणरुचिपिहितलसदुडुचयसदृशनखमणिरमणीयचरणकुशेशयानुशयबान्धव इव वसुवितरणानन्दितद्विजराजे द्विजराज इव रत्नाकरवृद्धिदानचतुरे चतुरानन इव सदागमानुकूलवैभवे भव इव राजकलाभिरामे राम इव दानवारिसम्पत्करे करेणुकान्त इव कर्णाङ्घ्रिजनजनितस्पर्शनविताने वितानपावक इव सदाज्यागमसम्प्राप्तानन्दे नन्दनन्दन इव दिव्यसौन्दर्यगोप्यन्तःकर-

---

१ धर्मजातविजयः धर्मः जयश्च । पक्षे धर्मराजोऽर्जुनश्च । २ अनिरुद्धः स्वतन्त्रः । ३ प्रद्युम्नप्रचुरः अधिकशक्तिमान् पक्षे प्रद्युम्नः कृष्णपुत्रः । ४ अधिकंसमिति कृष्णाख्यानुपक्षे अधिकंसं-रसहृद् इति कृष्णपक्षे । ५ सुभद्रकृपात्सुतः पक्षे सुभद्रा श्रीकृष्णभगिनी । ६ अक्रूरसेव्यां क्रूरजनैरसेव्यः । पक्षे अक्रूरः प्रसिद्धः । ७ नवनीतवन्मृदुमनाः पक्षे नवनीतहृत् हैयंगवीनचौरः । ८ महोपलरत्नं प्रदाः शर्करादयो गुणलेशा दानमवलम्ब्य पक्षे र-नादिदाता । ९ मौनं मूकत्वं च मौनान्वयः मुनिवंशः ब्राह्मणकुलमित्यर्थः ।

णमोहनइतिप्रथाजनके जनक इव सुधन्वोरातिक्षपणदक्षे दक्ष इव महाहवशरणागतार्याधिक्षेपणोत्सुकमानसे मानससरोवर इव राजहंसाश्रितघनसारसवनाश्रितानिमिषकुले रणधूर्वहगर्वोत्पतद्गुर्वीश्वरखर्वेतरगर्वानलनिर्वापणवार्वाहसुपर्वाधिपगुर्वायुधसर्वोन्नतिसर्वंकषाखण्डचण्डिममण्डलाग्रखण्डितरिपुमण्डले प्रत्युप्तरत्नरत्नचित्रभित्तिकनिकार्य्यनिर्यत्ननिर्यत्प्रपारिरम्भशुद्धशातकुम्भस्तम्भसम्भृतजम्भारिमणितुलासम्भाराम्यर्णसमुत्कीर्णमुकुरनिकुरम्बविम्बितजाम्बूनदामतिमप्रतिमानुपमसुषमावलोकनसमाकलितरसाकृताकृतिनिसंदोहसंदेहकन्दलितहृदयारविन्दपुरन्दरसुन्दरीवृन्दसमत्तयामुक्तमन्दारदामसंदेहदाननिदानवितानावलम्बमानस्वच्छमुक्तासरगुच्छविसरपरिशोभितविविधकौतुकस्थानकालितास्थमनीषिकदम्बसम्भृतमोदावहवादाहवकोलाहललीलाकर्णनसमुदीर्णकर्णहर्षे प्रतिदिनसमुदग्रसौधाग्रसभापर्यन्तनिरन्तराकलितचटुलनटनवारसारङ्गीदृगङ्गीकृतसङ्गीतभङ्गीविवशान्तरङ्गीकृतस्वरङ्गणतराङ्गिणीरङ्गदुत्तुङ्गतरङ्गमालिकादोलिकाकेलिकासक्तमरालिकायालिकासविलासग्रहणकौतुकसञ्चरच्छम्बायुधपुरनितम्बिनीकदम्बपदाम्बुरुहावलम्बिमञ्जुमञ्जुमञ्जीरासिञ्जितस्वसजातिरासितभ्रमपरिभ्रमत्क्रमरपक्षविक्षेपविकीर्णसौवर्णाणोजराजिविशङ्काकलननिपुणनिजदर्शनार्थनिबिडितानन्तसामन्तक्ष्माकान्तसंततिदुर्वारसंमर्दपरस्परघर्षणोत्कर्षविच्युतकाश्मीराङ्गरागपरागपरावर्तितधूलीसमुत्क्षे-

१ इन्द्रनामरुद्देशराजः । पक्षे स्पष्टम् । २ निकाय्या_निलयाः ।

पणकेलीभरमदाकुलमदावलपङ्क्तिघट्टननिष्पिष्टरङ्गवल्लीमतल्लीमौक्तिकततिनतोहाराभजाभवत्त्वरसत्वरविमृग्वरभटपटलप्रतिक्षणावेद्यमानविविधविषयवृत्तान्ते मौनमुनिगोत्रकलशाम्बुधिनिशाकान्ते दान्ते रघुनाथक्ष्माकान्ते परिपालयति प्राज्यं राज्यं चोरदाव्दः कविप्रशंसायामेव धूर्तविचारो महीरूहेष्वेव चपलासक्तिर्जलधरेष्वेव पद्मिनीदूषणं पक्षिकुलेष्वेव पार्थिवप्रतारणविचारो वत्सरेष्वेव निरलंकृतित्वं कुकविकृतिष्वेव वक्रता कदाचन ग्रहेष्वेव हृद्रोगप्राचुर्यं शनैश्चरस्यैवेति रचितव्यवस्थे निखिलजने वितीर्णराजदीप्तिसौभाग्यं समुल्लसति तरणिमण्डलमिव धरणिमण्डलम् ।

विरचितरक्षोबाधाविधूननो लक्ष्मणाग्रणी राजा ॥
रघुनाथः पञ्चवटीं जानक्या साकमतनुत समोदाम् ॥ ३३ ॥

श्रीनव्यदुर्गनिलयः कृष्णः कविसार्वभौमविरुदाढ्यः ॥
प्रथमविलासं विदधे नवेन रघुनाथविजयेऽस्मिन् ॥ ३४ ॥

इति कविकृष्णविरचितायां रघुनाथविजयचम्प्वां प्रथमो विलासः ॥ १ ॥

—:०:—

## द्वितीयो विलासः ।

एकदा तस्य विविधतीर्थसार्थयात्रासक्तस्य रक्ताक्षिवत्सराविनयदशाभ्यां विजयदशम्याकलनकुतुकसरभसपरिभ्रमददभ्रकारितु-

---

१ धूर्तो धत्तूरसंज्ञको वृक्षः पक्षे धूर्तः शठः । २ चपला स्त्री विद्युच्च । ३ पार्थिवी राजा वा पृथ्वमूर्तिः पार्थिवनामा संवत्सरश्च । ४ विरुदं पदम् ।

रङ्गरथनिकरायां रघुनाथमहाराजस्य दुर्लङ्घ्याज्ञापथनाङ्किततया मुच्यमानतुरङ्गाणां बध्यमानपर्ल्याणानां[1] न्यस्यमानखलीनानां भूष्यमाणमहावल्गानां उद्ध्रियमाणनलकानां प्रविश्यमानकञ्चुकानां प्रतिमुच्यमानसारसनानामुच्यमानग्रैवेयकाणामुत्क्षिप्यमाणकौक्षेयकाणां[2] गृह्यमाणासिधेनुकानां[3] नह्यमानशिरस्त्राणानामारुह्यमाणरथानामुह्यमानखेटकानां[4] नर्त्यमानघोटकानां सज्जीक्रियमाणोष्ट्राणां नुद्यमानरथानां[5] उत्कम्प्यमानकुन्तानामुद्धूयमानोत्कम्पवसनानां क्रियमाणसिंहनादानां कार्यमाणकरिगर्जितानां चाल्यमानकशानां वल्यमानाजानेयानां निरुध्यमानवनायुजानां[6]आस्फोट्यमानरट्टनानामावञ्च्यमानजयदुन्दुभीनामाच्छोत्यमानहस्तानामञ्च्यमानकाम्बोजानामावेष्ट्यमानशोर्पिण्यपद्यानां विवेष्ट्यमानकलभानां उन्नम्यमानक्रमेलकानां एहि याहि देहि धेहि विधेहि निधेहि ब्रूहि पाहि जानीहि हरस्व विहरस्व परिहरस्व प्रहरस्व आहरस्व मोदस्व दयस्व कुत्र यासि तिष्ठ कदा महाराजो बहिर्निर्गमिष्यति किं करोति कुत्रास्ते निर्गत एवेदानीं नास्त्यवकाश इति जल्पतां प्रतीक्षमाणानां तद्दर्शनं भिकृतप्रतिभटकरटिघटानामुज्जृम्भितप्रतापच्छटानां युद्धरङ्गोन्नटानां बहुधैर्यस्फुटानां दुर्वारसंमदोत्कटानां यशोविमलितदिक्तटानां महारुणान्तदकपुटानामत्युद्भटानां भटानां पटलैश्चटुलैर्निबिडममुद्दर्शनार्थसंचरत्काञ्चनाङ्गीचञ्चलपाङ्गचन्दनमालिकाञ्चितविञ्चूरपुरमाञ्चिताखिलश्रीभरम् ।

१ पर्ल्याणं 'पलाण' इति प्रसिद्धम् । २ कौक्षेयकोऽसिः । ३ असिधेनुका 'जंबीया' इति प्रसिद्धा । ४ खेटकं चर्म 'ढाल' इति प्रसिद्धम् । ५ 'युज्यमान' इति वा पाठः । ६ वनायुजो देशविशेषोद्भवो घोटकः ।

रक्ताक्षिवत्सरेऽस्मिन्कस्माद्दुन्दुभिरुपागत इतीव ॥
रोषभरान्मौहूर्तिकमतेन जघ्नुर्भटा जयार्थं तम् ॥ १ ॥
अतिनिर्दयजनमर्दितघनमर्दलनर्दनार्दनोर्दण्डतरम्(?) ॥
मदद्दुर्दिनबद्दुर्दमरिपुकर्दमतर्दनार्ककुर्दनकलितम् ॥२ ॥
बहुसुन्दरघनदुन्दुभिनिनदं धुरि मन्दराद्रिकन्दरदलनम् ॥
पटुपटहपटलचटुरवघटितं शुश्राव भूपतिश्रेष्ठः ॥ ३ ॥

तावदेव भावजपरिभावव्यापारलोलरूपानन्दितनिखिलजनवृन्दो मन्दंमन्दं वसुन्धराधुरंधरः समुत्थाय सिंहसंहननसिंहासनाद्दीयमानहस्तावलम्बोल्लम्ब्यमानबाहुना करतलकलितसुकुमारवसनेन परिजनेन सविनयं निवेद्यमानमार्गः पदेपदे रक्षिवर्गैराक्षिमार्गप्रविष्टमात्रान्मर्त्यानियमयमेवेति जानानोऽपि मानाधिकगाम्भीर्यादप्रकाशितकुतूहलो यथा मर्यादमार्यांस्तांस्तान् सम्भावयमानः सगौरवमन्मद्वंशश्लाघमभूतस्य रघुनाथस्य बिभर्ति नामधेयमेष राजेत्यादरान्मूर्धानमुपाघ्रातुमुपर्युपरि मकुटं लम्बमानेन सौकुमार्यसौन्दर्यविलोकनविवासितहृदयतया लिङ्घितुमदःप्रसारितैकतरभुजदण्डेन मार्तण्डेनेव भुवानुगतेन सौवर्णदण्डाग्राधिष्ठितेन मरकतकलशालम्बितेन कनकगुणरचितातपत्रेण विभूषितमकुटीतटस्तत्तादृशसौन्दर्यविमानिततया जितोऽस्मीत्युपहारकृते कन्दर्पेणार्पितैस्तुरीयबाणनवमल्लिकाप्रतल्लिकापुञ्जैरिव चामरैर्वीज्यमानो निर्गत्यास्थानादग्रतः सर्वोल्लसितान् मुहुर्मुहुः करपुष्कराञ्जलीरञ्जनिष्ठीव्यमानलाजाकिरानिकरतया पदेपदे निषादिककोटिनानिरङ्कुशाङ्कुशाघट्टनवेदनासहनतया निजजन्मभुवमपि परित्यज्य कुत्रापि यातुं

नासिकाविवरान्निर्गतान्मौक्तिकपुञ्जानिवात्मजवत्सलतया राजसमीपं यातेत्युक्तिरतो गणवरान्विलोकयन्विन्यस्य पञ्चषाणि पदानि जयाशीर्वचनपूर्वकं द्विजव्रतप्रदत्तान् करकञ्जमञ्जुलकिञ्जल्कपुञ्जानिव अक्षतजयानक्षतचयान् संगृह्णानो विनयविनमितोत्तमाङ्गतया वदनचन्द्रातिमात्रसन्निधानात्तत्क्षणं सङ्कुचितेन भक्त्युन्नमितेनाञ्जलिपद्मेन यथोचितं मानयन् तांस्तान्समीक्षमाणोऽध्यक्षानखिलान् सैनिकांश्च निजविरोधिगजराजसाध्वसादिव प्राप्तसङ्कोचानां तुङ्गरङ्गत्तुरङ्गतरङ्गसङ्गतवाहिनीसमुन्मीलदम्बुजकुड्मलानामिव तदुदञ्चितानामञ्जलिपुञ्जानां निजवदनचन्द्रकटाक्षचन्द्रिकाप्रसारणेन चिरस्याप्यप्रदत्तविकासः सादरं परिजनदत्तकरावलम्ब आरुरोह निजजवविनिर्जितविहङ्गमं तुरङ्गमम् ॥ २ ॥

तावद्ब्रह्माण्डभाण्डस्फुटनपटुतरोद्दण्डदण्डप्रचण्डा-
घातस्फीताविगीतास्फुटपटहसटाभेरिकाभीरनादैः ॥
हेषाघोषात्तहस्तोद्भटकरटिघटागर्जिताढ्यार्जिताचि-
स्थैर्यैश्वर्यैर्भृशमखिलदिशां दन्तुराण्यन्तराणि ॥ ४ ॥

द्वेधा मध्यमवर्णं तुरङ्गमारुह्य चलति निखिलबले ॥
रघुनाथमहीपालो रञ्जितलोकः पुरान्निरगात् ॥ ५ ॥

कटुतरचण्डभानुकरतापभरं सह तेन
हि मम पालकोऽयमिति सादरया धरया ॥
विपुलमुदाञ्चितं दिवि वितानमिवातिघनं
व्रज उदजृम्भताश्वखुरदारुणदारणजम् ॥ ६ ॥

माद्यद्वन्धुरगन्धसिन्धुरचलत्पादातपादाहति-
क्षुण्णक्षोणितलोच्चलद्बहुरजःप्रोद्भिन्नदिग्भित्तिका ॥
हेषाघोषविघूर्णिताहितचमूयोधाधिनाथोद्भटा
नृत्यत्तुङ्गतुरङ्गपुङ्गवघनारङ्गीच्छुभाङ्गी चमूः ॥ ७ ॥
स्तुत्वा सर्वसहेति प्रतिपदमखिलास्ताडयन्ते पदैर्मां
यस्या लोके क्षमावांस्तमखिलमनुजाः क्लेशयन्ति ह्यजस्रम् ॥
स्तुत्यैषां किं ममेति क्षितिरतिकुपिता सर्वलोकोपरिष्टा-
दारूढेवा विभाति स्खलचलितमहाधूलिकापालिकाग्रे ॥ ८ ॥
बहुचत्वराभिरामाः समुद्गोपुरवारणोत्रासाः ॥
रथ्या विविशुः पुरतो विलसितमुखलीनगन्धर्वाः ॥ ९ ॥
पटुतरकोणताण्डवविजृम्भितजृम्भिपर-
स्फुरितघनदुन्दुभिप्रचुरझांकृतिसंश्रवणात् ॥
मम शिशवः शिशुर्मम कुत्र गता इति
जननीजनैर्भ्रमद्गिरि पुरि माणवकाः ॥ १० ॥
मत्ते देहि ममावकाशमबले तिष्ठात्र मुग्धे मना-
गुन्नम्याननमत्र पश्य ललिते त्वं तिष्ठ दृष्टं मया ॥
मन्दे तत्र नृपोत्र पश्यसि किमु स्निग्धे तथापि स्थिते-
त्यन्तस्तेन्तरमत्र किञ्चिदपि मे द्रष्टुं न दत्सेन्तरम् ॥ ११ ॥
इत्थं मत्ताः समृद्धिं धनधनदगिराज्ञानकाव्यक्षमाणाम्भा-
मेतं मागधं मत्वा नगरवनितया सर्वधन्यां च धन्याम् ॥

१ दुन्दुभिस्फारझाणझाङ्कृतिमेर ।

द्रष्टुं संजातहर्षश्चलति बलयुतः प्राज्यसाम्राज्यपूज्यः
जानक्या साकमालोकयसपरिजनो लक्ष्मणान्वीयमानः १२
मा स्माक्षीरिति जल्पसि प्रतिपदं कस्मादिहास्यागता
सन्धे त्वं नियमस्थिता यदि पुनः कस्मादिदृक्षा तव ॥
इत्थं सौधतलेषु पौरललना भूपालदृत्तेक्षणा
लज्जाहासविलासमञ्जुलतमा अद्धासुराराघ्नम् ॥१३॥
सौधाग्रस्थितललना बाहुलताग्रान्नृपालशिरसि तदा ॥
दरदलितकुड्मला इव लाजा जगलुर्मुहुर्मुहुर्विमलाः ॥१४॥
एतत्सदृशं ललनाकुचयुगलभूषितं कनकचौलैः ॥
इति कुतुकात्कनकपटीभूषितकुम्भा ववल्गुरिव डिम्भाः१५
वयमिव सैंधव एष क्षमामहे नेन्दुमेवमूर्ध्वस्थम् ॥
इति तं पाताथितुं भुवमुदग्रचरणा हयास्तदारिङ्खन् ॥१६॥

निवर्त्य चानुव्रजतः प्रजाग्रजाननुजादीन् महाराजान् द्विजांश्च भूरितेजा राजा विमृत्वरत्वरो यावद्दिव्यक्षेत्रयात्राकुतूहलमुन्मरतकयति स्वयं तावदुद्वलायद्भिस्तुरङ्गमान् मेङ्क्षयद्भिः क्रमेलकान्नादयद्भिर्वारणान्वादयद्भिर्वादित्राणि जृम्भयद्भिर्दुन्दुभिभाङ्कारानाज्ञापयद्भिः सरभसगमनं उत्कम्पितकेतनैमुच्चालितचामरमुन्नर्तितनालकातपत्रमुम्मस्तकघण्टारवमुन्नीतधूलिपालिकमुद्दामद्रपाथोपमूर्च्छतालस्यमुदञ्चितान्दोलिकावहनधुरीणजनविविधमोदमनन्यमानसैः सैन्यैरतिक्रान्तचतुर्दूरवर्त्मा धर्मात्माग्रतस्तत्रतत्र सलिलक्रीडासक्तयौवनोद्धतमुग्धस्निग्धवधूकुचकनककलशनर्चितमसृणघसृणपङ्क-

१ लक्ष्मणा राजचिह्नयुक्तः। २ हस्तिवालकाः। ३ केतुवस्त्रम्। ४ दर्वः।

क्षालनपाटलैकदेशतया तदञ्जनक्षालनात्मेचकिमैकदेशतया च वृद्धगङ्गेयमावयोः पूज्या सखीति प्रेमातिशयेन समागताभ्यां सरस्वतीकलिन्दनन्दिनीभ्यामिव कृतपरिरम्भां क्वचिन्मृदुलतरपुलिनखेलदतिसुकुमारलक्ष्मणावीक्षणकलकलरवव्याचालितया निजतटविरचितविहारः पुरा पुनरिदानीं स एव जानक्या साकमाकलितलोकानन्दो रघुनाथभूमीन्द्रः समागत इति मुखागमनवार्तामिव पृच्छन्तीं निरीक्षितचरीं गोदावरीमतीत्य सत्यसंधो विरचितनिखिलजनसुखोत्सेकां नासिकां नाम नगरीं प्राविशीत् ॥३॥

प्रोद्यत्क्रोधेन यत्राग्रजमनुसरता लक्ष्मणेन प्रलूना
नासा रक्षोभगिन्या रघुकुलपतिना यत्र धीराग्रगेण ॥
ताडङ्कक्रूरदृष्टक्षुभितसुरपतिप्रष्ठलोकाधिपालाः
पौलस्त्याज्ञाधुरीणाः सपदि विदलिता भीषणा दूषणाद्याः १७॥

मदनमदहारिरूपो भूपो जात्वप्यनात्तगन्धोपि ॥
आत्मानं पश्यन्तीमानन्दयदेष नासिकां चित्रम् ॥१८ ॥

गोकन्याक्षितिगन्धसिन्धुरमहावाहाग्निगेहादिमा-
संख्यातप्रतिपादनाश्चितबुधेष्वेष क्षमावल्लभः ॥
गोदातीर्थनिषेवणादनुनुतात्मानं धुताघं बत
प्रायोऽहंकृतिदूरगाः क्षितितले सन्तो महान्तो जनाः १९

श्रीमन्नवदुर्गस्थः कृष्णकविः सार्वभौमबिरुदाढ्यः ॥
द्वैतीयिकं विलासं विदधे रघुनाथविजयेऽस्मिन् ॥ २० ॥

इति कविकृष्णविरचितायां रघुनाथविजयाख्यचम्प्वां
द्वितीयो विलासः ॥ २ ॥

१ सुवर्णगिरिः सुवर्णस्थानम् ।

## तृतीयो विलासः ।

—:०:—

तदनु यथाक्रमं कृतनिमज्जनो निखिलमङ्गलतुङ्गाधारे गङ्गाद्वार आरचिताध्वनः समुन्नतशिलावलाघट्टनजनितातिशावर्ते कुशावर्ते अङ्गीकृताभिषेकः मकरन्दतुन्दिलहल्लके बिल्वके निर्वर्तितानुष्ठानः परिवृतनिखिलकालिकल्मषाभीलगर्विते नीलपर्वते ऊरीकृतस्नानः पावितजनकुले कनखले च तीर्थे परार्थे भूतलावतीर्णत्र्यम्बकपदाम्बुजसेवाभिलाषसमागतपुरन्दरपुरसुन्दरीवृन्दरीतिहरणनिपुणरमणीजनशरणीकृतनाणीविमानसमानलसनानकूलरत्नसौधयूथनिबिडितस्थलध्वनिगधातलमघारितशस्तकस्तूरिकादिनिस्तुलवस्तुगरिमिश्रपरिमलकृतनिगल्नुम्पंधयधुरन्धरहृन्दनीरन्ध्रतया निनार्थिनाथं त्र्यम्बकमनुकर्तुं नागाजिनेनेव रचितावगुण्ठनस्य त्र्यम्बकशैलस्य निधिमालङ्कारवज्रमौणि निजनेत्रसाधर्म्यावलम्बनेच्छयेव त्रिधावतीर्णं त्र्यम्बकं नाम भगवन्तमुमाकान्तं संसेव्य सानन्दबाष्प इत्थमस्तौषीत् ॥ १ ॥

भगवंस्त्र्यम्बक इति किल निगमान्तैर्गीयसे भवान् सततम् ॥
तदपि सनदाटिराधि यच्चित्रमिदं किं ब्रवीमि तव चरितम् ॥
त्वं त्र्यम्बकोपि चित्रं पञ्चाम्बिकनधनरूनमुखोसि विभो ॥
नहि साधनसम्पत्तिः फलाय तद्वद्यथा वेजः ॥ २ ॥
त्वं नीलकण्ठ एव श्रीमन् सन्मानसे कथं नित्यम् ॥

---

१ कृतस्नानः । २ कृतमार्गगमनः । ३ नेत्र्यादिकाशितातात्कमलम् । ४ आमीलं मर्यकं । ५ शाश्वमिन्द्रान्नः । ६ पञ्चाम्बको मदनः ।

विहरसि विचित्रमेतच्चरितं तव कुमुदबन्धुमौलिमणे ॥३॥

ये वृषवन्तो धरणौ तेषां सुलभोसि देव पुरवैरिन् ॥
वृषमुत्सृज्य पदं वा न चलसि वृषवाह यस्मात्त्वम् ॥ ४ ॥

दोषाकरमपि शिरसा दधदश्रान्तं भवन्तमिह भजताम् ॥
दोषाणि धुनोषि विभो वृत्तिस्ते नयनवह्निपया ॥ ५ ॥

अग्निर्नयनमप्रियोपि त्रिनयनमुकुटेन किमिति ते श्लाघ्यः ॥
इन्दुर्हिमसम्बन्धादथ वा हिमवत्सुताकान्तः ॥ ६ ॥

आचरसि हि भिक्षाटनमथापि सम्पत्तिमादधासि नृणाम् ॥
परमेश्वरोसि कस्माद्दिगम्बरोसीति शिक्षकः कस्ते ॥७॥

पञ्चाननः षडाननमाहितोसि विचित्रमन्यदेतच्च ॥
त्र्यम्बक सहस्रनयनाश्रितोसि नित्यं यदेष त्वम् ॥ ८ ॥

इत्यभिष्टुवन् हृष्टमानसः स महीपालमणिश्चिरतरं महानट-जटाजूटकोटिकोटरतटनिवासजनितविरहक्लेशशशाङ्कपरिरम्भार-म्भसम्भ्रमवितरणापर्यवतीर्णताराबलीभ्रान्तिदन्तुरीकरणनिपुणस्मे-रानवमुक्ताहारावलीः ज्योतिःस्वरूपोयं त्र्यम्बकेश्वर इति तस्मै-वयमुपगन्तुमागता विद्युल्लता इव दिव्यकनकपटीश्च पटीयस्या भक्त्या समर्प्य तस्मै चिरतरं किमपि किमपि मनसि महातपो-त्सवादिपरिष्कारनिष्कर्षं निष्कासितसंशयं विचिन्त्य यावत्त-द्दिव्यालयान्निर्गच्छति तावदताडयन्त दुन्दुभीनमर्दयन्त मर्दला-न्दैरयन्त तूर्याण्युदघोषयन्त जयजयशब्दाननर्तयन्त वारवधूटि-

१ चन्द्रम् । २ अग्निः नयने तयोः प्रियः । ३ इन्द्रपूजितः ।

का व्यसयन्त धवलान्तपत्राण्याकम्पयन्त चामराण्यचालयन्त कुन्तानवल्गयन्त तुरङ्गानद्रावयन्त शताङ्गानगर्जयन्त मातङ्गान-चारयन्त पदातीननादयन्त काहलानवादयन्त पटहाद्यनाद्यान-तर्जयन्त क्रियामन्दान् कचिद्दृप्यन्तो धुप्यन्तो हसन्तः पराप-तन्तो निश्वसन्तो ब्रुवन्तस्तूर्णं यातेति धून्वन्तः शिरांसि तन्व-न्तोञ्जलीनमुञ्चत आनन्दबाष्पान् सिञ्चन्तश्चन्दनवारिभिर्जनान् सै-निकांश्च स्वकृत्यसज्जीभूता एवं यावद्भवन्ति तावद्यथापुरं प्रवि-श्य नैजोपकार्यामार्याणां यथामर्यादमपर्याप्तं वितीर्य धनं महीपाल-वर्यो निर्गत्य तस्मान्नगरादतिक्रम्य रम्यान्प्रदेशानगणितशृङ्गस-ङ्कतेऽपि सप्तशृङ्गनरधामे भूमिधरे पुराणैरिव पुरातनवाणीमष्टाद-शभिराश्लिष्टां भुजैरजय्यैः संसेव्य भव्यां देवीं भदाय प्रमदाद्-दारोऽवदातकीर्तिर्यथेष्टं तुष्टचित्तो वित्तं तत्तदनुगुणे महाजनेभ्यो विहाय तदपि स्थलमैलनदीपरिसरभुवि ज्योतिर्मयमभिवन्द्यारिज-नभीष्मं घुष्मेश्वरं पुरस्कृत्यापि तं पश्चात्कृत्य गोदाः[1] प्रायेण प्र-वरासङ्गदत्तचित्ता भवन्तीति सूचयितुमिव जगतां प्रवरास्यनदी-सङ्गमनुभवन्त्याः सकलजगच्छ्रीदायाः गोदायास्तटभुवमधिवस-न्तं गोदाश्रिताः प्रवराश्रिता वा पुंसिद्धाः[2] भवन्तीति निदर्शयितुमि-व सिद्धेश्वराभिख्यां प्रख्यापयन्तं हैमवतीकान्तं प्रणम्य सम्य-ग्विसृज्य तं च प्रदेशं निखिलजगत्सम्पन्निवासं निवासं[3] नाम प्रवि-श्य पवित्रं क्षेत्रं प्रणम्य मोहिनीरूपं भगवन्तं रमाकान्तमतिक्र-म्य तत्क्षेत्रं भीमानदीजनिभूमौ डाकिनीवने नीपवने घने निरिं-

१ गोदानकर्तारः । २ प्राप्तपुरुषार्थाः । ३ 'नेवासे' इति प्रसिद्धम् ।

लसुरस्तोमातङ्कहरं भीमाशङ्करं निखिलनयनमात्रज्योतिःस्वरू-
पोपामिति न्यूनतामपहर्तुमिव शुद्धज्योतिःस्वरूपं नयनपद्वीजङ्घा-
लमारचय्य विरहय्य तामपि स्थलीमन्यत्र कचिन्निखिलजनोद्-
दण्डाज्ञानमण्डलविपतरुखण्डखण्डनप्रचण्डदात्रे मार्तण्डक्षेत्रे निर्म-
लजललहरीतीर्थनिकटमावसन्तं नित्यतेजोनिधिं स्वीयतनूमपि मां
तनूकृत्य पृथिव्याद्यष्टमूर्तिता प्रकटिता त्वया को मेऽतिशयः प्रति-
पादित इति कुपितं मार्तण्डमाश्वासयितुमिव विसृष्टान्यनामवि-
चारमाश्रिततन्नामधेयोपपदं ईश्वरमभिवन्द्यानन्तरं च नातिनो-
दूरे मयूरेश्वरक्षेत्रे प्रणिपत्य निखिलजगदभयदायकं विनायकमितर-
त्र गिरौ विलोक्य प्रबोधितजगदुत्सवारम्भं शम्भुं महादेवमग्रतो
विलोकयन् विविधविलासिजनविहरणाभिरामानारामान् विपुलव-
नलक्ष्मीवक्षोजकुङ्कुमशङ्काकरानपि पङ्कजाकरान् तत्रतत्र विजृ-
म्भितकामिनीनृत्तगमनमुदितमन्दमृदङ्गधिधिमिध्वानबन्धुराणि
निरुपमगुणधराधरनन्दनारमणमणिमन्दिराणि च पुरतः पार्श्वद्व-
यनिहितरत्नदीपकान्तमणिकान्तानिशान्तमहिषपान्थजनसंवर्धित-
नारीवैभवान्विताक्षीकुलकलकलमुखरं राजश्रीविहारं नीरानरसिंह-
पुरं प्राविशत् ॥ २ ॥

स्तम्भादुज्जृम्भमाणः पुरहरसुरराट् प्रस्तुतो ध्वस्ततापा-
न्विश्वानाश्वास्य शश्वद्वसतिसुरनरान् धिक्कृतां हा नृसिंहः १०॥

मञ्जुलवानीरायां नीरायां विरचिताप्लवोऽसौ मोदात् ॥
खेदान् परिधुन्वन्तं तन्वन्तं श्रियमियेष देवं द्रष्टुम् ॥११॥

तावन्निजागमनविचारनिशमनजनितजवैर्नरहरिपरिवारजनैः समर्यादं सज्जीभूतैरत्र इति नीयमानो मानवपतिरग्रतो जाग्रतो विलोकयँल्लोकांस्ताड्यमानभेरीकैर्नाद्यमानवीणैर्वाद्यमानवादित्रैश्चोद्यमाननर्तनैरापाद्यमानहस्ततालैर्नुद्यमानोत्कम्पवसनैर्भिद्यमाननारिकेलैश्चोद्यमानदिव्याम्बरैर्विद्यमानभगवद्दिव्यगुणैस्तुद्यमानजडजनैर्विद्यमानफलकुसुमैर्वेद्यमाननरहरिनामधेयैरासाद्यमानानन्दैराह्लाद्यमानपरस्परैरद्यमानताम्बूलैरखिद्यमानवदनैरुत्साद्यमानजनसन्वैः प्रसार्यमाणोपहारैरुदीर्यमाणतानैर्विचार्यमाणशास्त्रार्थैरुदीर्यमाणानन्दबाष्पैः प्रचार्यमाणनिर्गमघोषैरुच्चार्यमाणपुराणैर्विस्फार्यमाणलोचनैरुद्धार्यमाणाञ्जलिपत्रैराकार्यमाणस्वस्वजनैरापूर्यमाणभक्तिभिरुत्प्रेर्यमाणकुसुमैरवार्यमाणपुलकैरास्मर्यमाणहिरण्यकशिपुमथनकथाविशेषैर्विस्तार्यमाणमार्गैः परिस्तीर्यमाणवसनैर्विकीर्यमाणलाजाञ्जलिभिस्त्वर्यमाणस्त्रीजनैर्भ्रियमाणाभरणैः क्रियमाणप्रणामैरादृियमाणभागवतैर्वीज्यमानचामरैस्त्यजमानान्याविचारैरनुभुज्यमानभगवद्दिव्यविग्रहसौन्दर्यसेवनै रज्यमानहृदयैः परिष्वज्यमानमित्रैः सृज्यमानस्वस्वविद्याकौशलैरुत्तेज्यमानप्रदीपैर्विभज्यमानगोष्ठीकैः सज्ज्यमानचन्दनैः प्रसज्ज्यमानपटवासकैस्तर्ज्यमानशब्दैर्न-

१ मञ्जुला वानीराः वेतसीवृक्षा यस्यां ।

र्यर्ज्यमाननीचजनैर्नीराज्यमानभगवच्चरणारविन्दैर्भ्राज्यमानमदी-
यैश्चानेकविधजानपदचातुर्वर्ण्यजनैः सर्वप्रदेशस्याप्यप्रदत्तावकाशं
क्वचिन्निरन्तरसान्द्रचन्द्रशालाजालाग्रविसरदसदृशपद्मरागपुञ्जम-
ञ्जुलमयूखरेखाविलोकनजनितया समुदयदरुणकिरणकिरणसमुद-
यमनीषया क्षपास्वप्यपरित्यक्तप्रियतमाश्लेषैः सन्तोषैश्चक्रवाकैर-
लंकृतविटङ्कां क्वचिदुदग्रसौधाग्रयूथाग्रगवाक्षलक्षनिर्यत्नानिर्पतता-
दृशमुक्तावज्रमणिघृणिदर्शनसमुद्भूतया शिशिरकरकरनिकराधिषण-
या दिवापि लेलिह्यमानरसनैश्चकोरनिकुरुम्बैः परिष्कृतदेहलीकां
क्वचिदन्तरान्तराखचितसौवर्णलतावितानबलारिपुनीलसौधशतवि-
लोकनोदञ्चितहृद्याविद्युद्धशताञ्चितसद्यःसमुद्भवदम्बुधरकदम्बबुद्धि-
तया वर्षेतरसमयेपि निरन्तरकृतताण्डवैः शिखण्डिमण्डलैर्म-
नोहरां श्रीनृहरिदिव्यालयाभ्यर्णगेहवीथीं कथंचिदातिक्रम्य प्र-
विश्य भगवद्दिव्यालयं पुरतः सकललोकलोचनभागधेयमिव
मूर्तिमूर्तिभूतं विनताखिलजनताधिकघनतापहघनवाटशमोदावह-
पादाम्बुजयुगलगदगणिततरसितमुक्तामणियुक्ताङ्कितहंसकममहं—
मकरन्दुतमनिरतिपतिमातिशतिश्वतिनह्वावसुजह्वायुगममलाननकमला-
श्विनकरिरसरकरानिभशुभविभवोरुयुगसदरुग्वल्लहेमाम्बरधामाधि-
कघृणिमणिगणझणझणझणदाञ्चितघनकाञ्चनमयकाञ्चिकमतिराहु-
पमपारुक्लमदरिदरपरमोदरपरमुरसाचितमरसोदहनिलयं धृत-
नव मुरुनुतमन्दरोद्भिनमधिकं गदोल्लसितसरणकराकिरण-
मणमरणमणिमराणिमरसुन्दरतरं हृदयमन्दिरतल्लामितदाराननर-

१ भरताभिनयमुद्रः। २ रिङ्गन राजहृदादिषु पददशश्रुयम्।

रुचिकलितकौस्तुभमणिं सततमिन्दुसुन्दररुचिं दयानिधिममन्दसान्द्ररुचिसरससरसिरुहरुचिरदृशानिचयगिरिमभरमथनदक्षिणेक्षणमनुक्षणक्षपितरूक्षराक्षसकुलं विकटमुकुटतटखचितरुचिररत्नान्वितवलमथनमणिवृणशबलितनिजदिव्यविग्रहकान्तिं भगवन्तं प्रणतसरसिजजननिपुरहरं नरहरिं निजकुलदैवतं भावितहर्षोत्कर्षप्रमृमरपुलकोद्गमो विलोक्य नयनयोर्महोत्सववितरणेन सम्पादितानृण्यः पुण्यकर्मणामग्रगण्य इत्थमभितुष्टाव ।

स्फूर्जत्पर्जन्यगर्जाप्रसरणरभसोतर्जनात्पूर्जितैः स्वै-
रुत्कृष्टैरट्टहासैर्दिशिदिशि चलितैः शाश्वसं साध्वनन्तम् ॥
चक्रे शक्रेशमुख्या क्षितिमुनिनिकरस्यापि सोयं कथं वा
शश्वद्विश्वमपश्चाभयद इति भवान् गीयते गेयतेजाः१२॥
त्वं स्तम्भभेदपूर्वकमुदितो भजतां समस्तमनुजानाम् ॥
प्रह्लादजीवनौषध विरचयसि स्तम्भभेदनं युक्तम् ॥१३॥
यदि च निवसेत्प्रह्लादस्यापरः सदृशः मुनौ
भवति हि तदानिर्भेपेक्ष्य प्रमोदभरो महान् ॥
इति मृगयितुं नूनं शत्रोर्बिभेद भवान् हरे
जठरमनिराम्नोभेद्रोपानलस्य कियान् म ते ॥१४॥
तादृशरोपेपि हरे लक्ष्मीदर्शनव्याप्तसन्तोषि ॥
अतिचण्डोपि धरित्र्यां जायानिकटे प्रसन्न एव जनः ॥१५॥
एवं स्तुवन् स्वकुलदैवतमात्मवंश्य-
राजर्षिभिः शुभगुणैरुपमाक्रिमाः ॥

---

१ [illegible] ।

मध्यं नितान्तमृदुलं परितः प्रजाग्र-
द्वालाकरोल्लसितचामरचारुरूपम् ॥२३॥

अम्ब भार्गवि मर्त्यसिंहविभोर्महार्घपदाम्बुज-
द्वन्द्वसंवहनं मृदु प्रविधाय कोमलहस्ततः ॥
तत्र देवपदाम्बुजेर्पितसर्वपूजनसत्फला-
शेपमञ्जुलकोमलाम्बरमांसले शयनोत्तमे ॥ २४ ॥

इत्थं विष्वक्सेनवाक्यैः प्रहृष्टः
श्रीमान्यावद्धाति नीरानृसिंहः ॥
तावन्मर्द मन्दमात्तापसर्वः
मायारूपालोपि नैजोपकार्याम् ॥ २५ ॥

अन्येद्युः ।

रसालफलशङ्कया ग्रहणसंमुखीनैर्मिथः
प्रबुध्य कलहैर्द्विपैः प्रचुरपुच्छविच्छोटनात् ॥
महामणिरिवोदधेर्वियति दूरमुद्दङ्कितः
शुशोभ तरणिस्तदा समुदयन् बलारेर्दिशि ॥२६॥

कृतनिखिलाह्निकाः स्मृतबहुश्रुतिशास्त्रगणा-
भृतशुभभक्तयस्ततमहार्घगुणा निपुणाः ॥
नरहरिसन्निधेर्धुरिधृताञ्जलयः सुधियः
परिचरणानि तस्य परितः परितस्तेनिरे ॥ २७ ॥

मनिन्द्रयंश्रीवम् ।

---

१ स्वर्गारामृत्राण् । २ हन्द्रस्य । ३ प्रमारणामासुः ।

श्रीदेवदेवकरुणाजलधे मुरारे
प्राभातिकाम्बुजमदापहनेत्रकान्ते ॥
नीरातटात्तनियतालयरम्यमूर्ते
श्रीमन्नृसिंह भगवंस्तव सुप्रभातम् ॥ २८ ॥
हरिर्हरिर्हरिरिति मञ्जुभाषितं
द्विजावलेः सपदि निशम्य कौतुकात् ॥
द्विजप्रमोप्यनुवदतीव कूजितैः
कृपानिधेच्युत नृहरे प्रजागृहि ॥ २९ ॥
अन्तर्हिता वसति धामनिधौ प्रकाश-
मत्यन्तमेत्य जनयञ्जगतां प्रबोधम् ॥
प्राचीप्रदेश इह देशिकवद्विभाति
नीरान्नृसिंह भगवंस्तव सुप्रभातम् ॥ ३० ॥
गाढा विद्येव रात्रिर्विगलति न चिराज्ज्ञानवज्ञानुतेजः-
प्रोन्मीलत्यब्जबन्धुर्नलिननयनवद्दृक्पथं याति मन्दम् ॥
आनन्दं याति सान्द्रं मुनिवरकुलवद्देव सर्वं जगच्च
श्रीमन्नीरानृसिंह प्रभुवर नयने किञ्चिदुन्मीलयस्व ॥३१॥
काहलडिण्डिममण्डलझर्झरपणवाद्यद्यवाद्यानाम् ॥
संरपर्ययैव निनदा जृम्भन्ते सुप्रभातमच्युत ते ॥ ३२ ॥
इत्यभिष्टुत्यार्पितान्तैः सत्यधीभिः श्रियः पतिः ॥
पूजां यावत्प्रगृह्णाति राजा तावदगान्मुदा ॥ ३३ ॥
संसेव्य निर्जरगुणोत्तंसं दितिसूनुर्हिंसनं देवम् ॥
प्रत्यात्मानिपालो निन्ये स मुदं दिनं तत्र ॥ ३४ ॥

श्रीशैलवंशतिलकः कृष्णः कविसार्वभौमबिरुदाढ्यः ॥
तार्तीयिकं विलासं विदधे रघुनाथविजयेऽस्मिन् ॥३९॥

इति कविकृष्णविरचितायां रघुनाथविजयचम्प्वारतृतीयो विलासः ॥ ३ ॥

—:०:—

## चतुर्थो विलासः ।

कतिचन दिनानि तत्र क्षितिपालो व्युष्य हृष्यदनघमनाः ॥
अगणितविभवस्तस्मान्नगरात्प्रस्थानमतनुत बलेन ॥ १ ॥

अताडयन्त दुन्दुभीनमर्दयन्त मर्दला-
ननादयन्त काहलानसज्जयन्त वारणान् ॥
अवल्गयन्त घोटकानधारयन्त खेटका-
नहेपयन्त सैन्धवांस्तदा मुदा जना घनाः ॥ २ ॥

बालं कञ्चन मामकान्वयमणिं यद्भाति चित्ते भवा-
न्नामास्यं नहि मुञ्चसि क्षणमपि त्वं कस्य हेतोरिति ॥
प्रष्टुं किं समुपागतेव रविणा छत्रेण हैमात्मना
कान्तश्रीरभिरूढतुङ्गतुरगः श्रीपाण्डुरङ्गं ययौ ॥ ३ ॥

उन्निद्राक्षैर्नितान्तं कृतपटुनटनै रुक्मिणीविठ्ठलेति
श्रीमन्नामोच्चराद्भिः कटिघटितपटैर्हस्ततालप्रशस्तैः ॥
हस्तामात्तप्रदीपैर्धुतदुरितचयैर्दैवदिव्याङ्कपाली-
प्राप्त्या भक्तैः समन्तादपि निबिडतमं सन्ततं यत्समिन्धे ४।

१ भद्रपाठे सिंहासनम् ।

प्रातीयं हृदयाम्बुजं चिरतपोभ्यासात्समुन्मीलना-
दीपल्लोचनयोर्गमिष्यति त्वहिलेख्याय नः श्रीपतिः ॥
इत्यामील्य दृढं विलोचनयुगं ध्यायन्ति यत्राच्युतं
मानन्दं मुनयो भवन्ति मनुजाः कृच्छ्रार्जिते सादराः ॥५॥
यद्दीक्षालवलेशलेशकणिकालापाज्जनाः केचन
स्वर्गं ग्रानपि निर्भरं विदधते भिक्षाककोटौ क्षणात् ॥
तां लक्ष्मीं विदधद्दशोपि भगवान्यः पाण्डुरङ्गस्थली
त्यक्तुं जात्वपि नेच्छतीह बत तं राजा ददर्शाच्युतम् ॥६॥

एवमस्तौपीत्साञ्जलिबन्धम् ।

सायन्तनकुवलयमदहरणचणस्निग्धमुग्धदिव्याङ्गम् ॥
ध्यायन्ति यं मुनीन्द्राः सोसौ साक्षात्कृतः सरोजाक्षः ॥७॥

सपुलकाञ्जलिबन्धम् ।

वेदान्ताभरणे श्रयामि चरणे ऊरू तयोरुश्रिया
बाहू चापि वहूज्ज्वलौ हृदि भजे वक्षश्च लक्ष्मीयुतम् ॥
वन्दे चन्दिरसुन्दरं च वदनं फालं च कस्तूरिका-
नीलं कुन्तलमालचुम्बितकनन्मूलं च मौलिं भजे ॥८॥

अपि च ।

हरिरसङ्गतिरिव तव भगवन् सर्वार्थदानहेतोस्ते ॥
अवतारस्तदपि त्वं न कदाचित्त्यजसि पाण्डुरङ्गमपि ॥९॥
देवेश चन्द्रभागाश्रितो विधुश्चासि तदपि यद्भगवन् ॥
श्रीपुण्डरीकवरदाभिख्यां वहसे तदेतदतिचित्रम् ॥१०॥

अन्यच्च ।

तप्त्वानर्घं तप इह चिरात् प्रार्थितं यन्मुनीन्द्रै
रुक्मिण्या अप्यसुलभतमं दिव्यमालिङ्गनं ते ॥
धन्या एतेऽनुदिनमपि तत्प्राप्य हर्षं भजन्ते
मालापिष्टातककरतलाः किं ब्रुवे धन्यतां ताम् ॥ ११ ॥

कथयन्ति विठ्ठलविभो राात्मज इति मां ममावनमरोऽपि ॥
न स्यात्कथं तव हरे तनुजं को वा न पालयेल्लोके ॥ १२ ॥

किं बहुना ।

नित्यं भक्तजनावनेन च नृणामालिङ्गनैस्तादृशी-
र्लक्ष्मीकान्त निपीडितोसि न यदि त्वं पाण्डुरङ्ग प्रभो ॥
कव्यां न्यस्तकरः सदापि कुरुषे संवाहनं हा कुतः
पाह्यस्मानपि ते विचारयति कः श्रान्तिं कथं वाप्यसे१३॥

इत्यभिष्टुत्य गृहीततत्प्रसाद उषित्वा तत्र दिनानि कानिचि-
त्तावत्समुदयति घनतरोष्मयुवकामिनीकुचकनककलशपरिरम्भसं-
भ्रमसमात्तधैर्यतरुणसमुदये हेमन्तसमये स्वाधिकतरागस्त्यमहा-
मुनिमहामहभरावधूततयेव मन्दीभूततेजस्याश्रितदाक्षिणायने ती-
क्ष्णभानौ शीतकरायमाणे धामनिधिमण्डलविधुरायां नितान्तरता-
न्तपरिश्रान्तिजनितघर्मजलनिर्मृष्टतिलकायामिवाम्बललनायां दि-
शायां धनदगोपायितायां दुःसाध्यतरमानिनीमानमहापिशाच-
दूरोच्चाटनहेमन्तमान्त्रिकमन्दानिलफूत्कृतोद्दाङ्कितविभूतिभ्रमावह-
हिमानीसमानीततुषारसंभारे दशदिशाभ्यन्तरे निर्भरविजृम्भमाण-
यौवनोष्मानिस्तनयुगलाविरलाश्लेषदूरीकृतहिमोद्वेगसरागहृदयत-
रुणकामुकनिकरमविशेषदष्टरदनवसनदलास्वपि प्रालेयशीकरानि-

करस्फीतमारुतव्रणितावराणां जनानां वचनीयतामनुपगतासु मु-
ग्धवनितासु अजातनिर्भरहर्म्याग्रभागशयनमनुद्घाटितगवाक्षभव-
नमारचन्दनचर्चनमकुसुमहारोपहारमस्नानमत्रिकतालवृन्तवीजनं के-
वलकस्तूरीचन्दनलेपनमतिमात्रताम्बूलचर्वणं राङ्कवैकवसनं गाढालि-
ङ्गनमात्रसारमनुभवन्तीषु सर्वरात्रं कामिनीषु कामुकैः सह रतो-
त्सवमेवमतिक्रान्तेषु तद्वत्सुदिनेषु विसृज्य तां नगरीमवाप्य कोला-
पुरीं तत्र भागधेयं भगवतो नारायणस्य भगवन्निवासस्थानार्भम-
स्यद्युनातनमन्दाराणामपि निलयीभूय सेवया कृतार्थयानि जन्मे-
ति निश्चित्य दृढात्मना परिणतेन किरणसहस्रश्रेणिदेदीप्यमाने
चण्डकरमण्डल इव सुवर्णसहस्रपत्रे समासीनां शरणागतजनहृ-
दयादपह्नं रागातिरेकमिव प्रकाशयद्भ्यां अरुणारुणाभ्यां चर-
णाभ्यामुद्भासमानां जननीस्नेहदर्शनकुतूहलपरिरम्भमाणविबुध-
तरङ्गिणीसंशयवशहस्तकुटकूलमूपिनाङ्की दिव्यविग्रहलावण्यमन्दा-
किनीमध्यावतीर्णैरावतकुम्भाभ्यामिवोर्ध्वप्रकाशमाना-
भ्यां कुचाभ्यां प्रकटितोत्तमस्त्रीलक्षणां निजमहिमानमनुकुर्वद्भ्या-
मिव श्रुत्यन्तप्रणयिभ्यां नयनाभ्यामानन्दितमुकुन्दहृदयां निजा-
न्तेवासिनः प्रति दयालुं कारयितुं समाश्रयता शुकेनेव वचनि-
ष्केन विभासुरफालतलां पुरस्थितनासाचम्पककोरकभीचकितया
पश्चाद्धावमानया यौवनारम्भमधुकरमालिकयेव वेणीलतया परि-
ष्कृतां भगवतीं भवाब्धिनौकां राकाशशिवदनां कुन्दकुड्मलरद-
नां जगज्जननीमनीनयद्दृष्टिपथम् ।

---

१ मृगलीमथनम् । २ बिम्बाधरं प्रकाशयन्तम् ।

अथ नुतिवाक्समार्जितनिरङ्कुशवत्करुण-
पुरमपि तद्विसृज्य नगराणि नदीश्च गिरीन् ॥
कतिपयवासरैरतिपतन् द्विरदैस्तुरगैः
सह पथि कृष्णवेण्यभिधशैवलिनीमभजत् ॥ १४ ॥

दत्तात्रेयं सोऽभिवाद्याथ तत्र
श्रीमांस्तीर्त्वा धूतकृष्णां[1] च कृष्णाम् ॥
सूर्यासक्तां तां सदामन्दसेव्यां
छायाभिख्यां देवतामैक्षतासौ ॥ १५ ॥

महाभाचारकुशलद्विजराजनिषेवितम् ॥
कनकाचलनामानं ग्रामं भेजे ततो नृपः ॥ १६ ॥

सुरालय इति प्रथां भगवदाश्रयादात्मनो
व्यपोहितुमना निजाकृतिमपोह्य लज्जाभरात् ॥
पुराकृतिमुपादधे धरणिसीम्नि मेरुर्न चे-
त्कुतोऽस्य विदिता भवेत्कनकगिर्यभिख्या पुरः ॥१७॥

तत्र च भगवन्तमखिलजगदुत्पत्तिस्थितिविलयकारणं दुस्तरभवजलनिधिमहावर्तपरिवर्तनविवशार्तजनदूरार्तिलताकर्तनप्रहरणं प्रणमदमरपरिवृढमुकुटतटलुठदरुणाम्बुजभातिरम्याङ्घ्रिचरणं त्यक्तबहुविधभवशक्तिषट्कभक्तिरसासिक्तनिजचित्तभवमुक्तजनमनःसरसीषु निराबाधविहरणं महस्ततिनिस्तुलरमास्तनस्तबकवास्तव्यकस्तूरिकामोदमदासक्तसौरभकौस्तुभाभरणं रमालोचनचकोरहरिणाङ्ककिरणं क्षमानिहितसरोजपदचरणं नीलाविलासविहरणशरणं शरणागतज-

१ धुतं कृष्णं पापं यया सा ताम् ।

नभरणायत्तकरुणं कनकगिरिपुरसरसिजारुणं निखिलमुनिजनपरायणं नारायणमवलम्बितनृसिंहरूपमगणितमहामहिमाटोपं संसेव्यबहुतरं स्वायत्तीकृततदनुग्रहः निर्गत्य तस्मात्पुरादतिलङ्घ्य विरचितनिखिलजनतुङ्गभद्रां तुङ्गभद्रामतिक्रम्य गव्यूतिद्वयमात्रं मार्गं चण्डचण्डपुण्ड्रेक्षुकोदण्डभुजदण्डहिण्डमानकोदण्डमण्डलीसमीरितनिशितमुखशिलीमुखविकलीकृततरुणमिथुनकलितविविधलीलालालितमञ्जुनिकुञ्जपुञ्जराजितोपान्तवनिकावनिकान्तकान्तनितान्तनिरन्तरकन्दलितसन्तानसन्तानसरलबकुलक्रमुकमुखविविधविटपिनवुलविटपपटलाञ्चलचञ्चलचञ्चरीकसञ्चयसञ्चलितमञ्जरीजरीजृम्भदमन्दमकरन्दबिन्दुसन्दोहसन्ततविहरमाणशुककोकिलमुखविहगकुलचोटीपुटकोटीकुट्टनपरिपाटीपाटितनारिकेलरसालमुख्यविशालतररसालफलजालनीरन्ध्रनिष्यन्दमानसरसतररसधारासाराम्रेडितमाधुर्यगाम्भीर्यमङ्गलतरतरङ्गतुङ्गभद्रान्तरपरस्परपारिरम्भारम्भजृम्भितसारसलक्ष्मणापक्षविक्षोभदरविदलदविरलदशशतदलमुकुलगर्भनिर्भेदाविर्भवन्निर्भरसौरभकरम्भितमन्दानिलसेवापरवशयुवजननिबिडान्तरं त्रैलोक्यपावनतुङ्गभद्रान्तरङ्गनिमज्जनकुतुकावतीर्णसुरनिकरतटभूस्थापितासमानलसमानविमानसंशयाशंसिदेवालयशतकोटिसहस्रनिबिडितं प्रविश्य हेमकूटगिरितटघटितवसतिविरूपाक्षक्षेत्रं नाम किंचन पवित्रं स्थानं तत्र दिव्यालयमध्यभुवि परमेश्वरनित्यनिवाससौभाग्यकलितमद्विलासकैलासवैशिष्ट्याक्षमतया तत्साहस्यावलम्बनाय समागतमिव सुमेरुगिरिमुत्तुङ्ग-

---

१ तुङ्गमतिशयेन भद्रं शुभम् । २ रसभरितानि ।

कनकपीठमधिवसन्तं गिरिराजतनुजायामपि तत्प्रीतिरधिकेति रुषा जटाजूटाटवीमध्यमावसन्तीं सिद्धस्रवन्तीमाश्वासयितुं त्वमेकैव मम प्रियेत्यात्मना घटिकाखण्डलिखितामिवैकत्वबोधकाक्षरवर्णरेखां सितकररेखामुत्तंसयन्तं किरीटतटलुठदमरतटिनीतरसमुन्मीलितलताप्रतानेनेव जटाजूटेन कामपि कान्तिं बिभ्राणमदभ्रां शिरसि मानितोऽनेनेन्दीवरबन्धुस्तनन्धय इतीर्ष्यया तत्साहाय्याश्रयणाय तन्निकटजायमानेन बालसूर्येणेव तेजोमयेन निटिललोचनेन कल्पितानल्पाकल्पं बलरिपुमणिमदविधुतिनिपुणनीलकण्ठतया लालयति नित्यं प्रियतमां मम सखीं शिरसा स्वरङ्गणतरङ्गिणीमप्यस्य प्रिया भवामीति कण्ठाश्लेषमातन्वन्त्या कालिन्द्येव कलितं विरञ्चिपञ्चायुधपञ्चाननास्त्रयो वयमिह त्रिजगत्प्रख्यातवैभवा इति सूचनायेव त्रिशूलं दधानं निधानं निखिलसम्पदां जटाजूटघटितस्य निजाधिनाथस्य कलानाथस्य कार्श्यं वीक्ष्याश्रयान्तराभावकातर्यमापन्नमैन्दवमिव कंचन कुरङ्गबालकं कलयन्तं करतलेन समाश्लिष्टं गौर्या विद्युतेव शारदाभ्रं मुधास्मद्वल्लभं कुतो बभासि कपर्द इति प्रार्थयितुमुपागताभिस्तारावलीभिरिव मुक्ताहारावलीभिरलंकृतं चन्द्रिकयेव परिपूर्णचन्द्रं हिमान्येव हिमवन्तमात्मोद्भूतस्फटिककान्त्येव रजताचलं इन्द्रवज्रप्रभयेवैरावतं विभूत्या समुद्धूलितविग्रहं विरचितकुसुमायुधनिग्रहं दक्षाध्वरध्वंसदक्षं विरूपाक्षं चिरतरमभिवीक्ष्य प्रणम्य प्रणम्यानन्दसिन्धुजलमज्जायमानमानसोऽभूत् ।

१ चन्द्रलेखाम् । २ देवनदी । ३ भालनेत्रेण । ४ जटाजूटः । ५ हिममयूखः । ६ अङ्कम् ।

निशम्य तत्रैत्य जनेन वर्णितां सहस्तिकोणाख्यपुरस्य रम्यताम् ॥
तत्रैव तमुं तप आत्तकौतुको विनिर्ययौ श्रीरघुनाथभूपतिः ॥१८॥

अविदूरे च क्षेत्रस्य तस्य चक्रतीर्थपरिसरे ।

सुन्दासुरेन्द्रसुतसन्दारणस्फुरदमन्दाग्रदोर्बलवरं
सन्दानितत्रिदशवृन्दाग्र्यपङ्क्तिसुखानिन्दावहस्वचरितम् ॥
वन्दारुकाग्रसरवृन्दारकेशसुरवृन्दानतिक्षणगल-
न्मन्दारकल्पवरकुन्दादिसत्सुममरन्दाभिषिक्तचरणम्[१] १९॥

आतारकधूतानघभूताधिपचापं सुतादिमगीताद्भुतपूतात्मचरित्रम् ॥
सीताखिलभूताभयदातारमजस्रं सीतापरिणेतारमुदीताद्भुतहर्षम् २०

वीरं सुकुमारं नितमारं निमलस्या-
धीरं गुणनीरन्ध्रमुदारं क्षितिपालः ॥
कामं सुरसामन्तविभीमं प्रमदार्चं
भूमण्डलसोमं धुरि रामं स ददर्श ॥ २१ ॥

दशरथगृहदुग्धाम्भो यस्मिश्चन्द्रे कृतोदये जगति ॥
कुमुदानन्दः शान्तश्चित्रं निशिचरभयं च संजातम् २२॥

वृषपर्वणानुकूला वभौ यदीया समुद्भूतापङ्क्तात् ॥
सीतानुषक्तमनसा येनानघकर्पकेण साऽहल्या ॥२३॥

निजचरितानीव मुहुर्बहुतेजस्सोमरहितानि ॥
युद्धानि यस्य तद्वच्छत्रुखरादियातुवदनानि ॥२४॥

तिष्ठायाति दशाननोद्य भवता प्रोक्तं तथैवास्तु ते
देवानांप्रिय युक्तमेतदपि मे नालुक्समासं पदम्[२]॥

---

१ मरन्दः पुष्परसः । २ अलुक्समासे देवानांप्रियो मूर्खः ।

तूर्णं दर्शय मे स्वसारमय तां या लक्ष्मणेन क्षणा-
द्विरूपाभूदिति रावणोक्तमखिलं योऽखण्डयद्वाग्भरैः ॥२५॥
लङ्का विभीषणेनाधिगता यदनुग्रहेण तज्ज्यायान् ॥
विपरीतवर्णलङ्कावाच्यं यस्याग्रहेण समवाप ॥२६॥
श्रीमानशेषभुवनत्रेता नेता विदेहतनुजायाः ॥
मङ्गलमुत्तुङ्गतरं तरङ्गयतु नः कृपानिधी रामः ॥२७॥
इत्यभिष्टुत्य नृपतिः प्रत्यर्प्यास्मै समर्हणाः ॥
यन्त्रोद्धारकनामानं मानयामास मारुतिम् ॥ २८ ॥
लङ्कालंकृतिसीम्नि दैवतवमूर्द्धारणे तोरणे
यः श्रीमान्प्रतनापतीनगमयत्पञ्चापि यत्पञ्चताम् ॥
तद्युक्तं खलु राक्षसानपि तथा सत्यापि सत्यार्चिषा
तुल्यान् द्रागतनोदिदं बत तयाशीतिं सहस्राण्यपि ॥२९॥
श्रीमन्नवदुर्गास्थः कृष्णः कविसार्वभौमविरुदाढ्यः ॥
तुर्यविलासं विदधे जयेन रघुनाथविजयेऽस्मिन् ॥ ३ ॥

इति कविकृष्णविरचितायां रघुनाथविजयचम्प्वां चतुर्थो विलासः ॥ ४ ॥

—:०:—

## पञ्चमो विलासः।

अदनु प्रणम्य तं लोकोत्तरनदीयसौन्दर्यसंदर्शनकन्दलितान-न्दो रघुनाथधराम(हे)न्द्रः किंचिदन्तरमेशानोपान्तनासनतरम्प्री-

१ ससम् । २ मध्यराग्नाः । ३ मानम् । ४ गाभा ।

तदुचितमतीव तद्दिशाभिमुखमुपसृत्य सर्वोत्तरतपःसिद्धये समाश्र-
यितव्या तादृश्यैव दिशेतीवोत्तराभिमुखमुच्चलन् नितान्त-
समुन्मिषद्वसन्तकालागमोद्भिद्देलालवङ्गतरुमालासुपुष्पद्रसालाव-
लीनक्तमालाप्रदीव्यत्तमालातिपल्लवितपालाशभूमिरुहजालामिता-
शोकसालालिमेदुरतमेलाङ्कुरोपवनमालासमुन्मिषितदोलाविशेषशु-
भलीलाविनोदभरलोलान्तरङ्गवननीलालकौघपुरबालामणीमधुरता-
लालिवीणाकलालापमूर्छनद्रवीभूतसन्निहितकलाधराणिशिलासमुद-
यतलामितोदितविमलविमलाम्बुनिर्झरपरिमेलनाढ्यरुक्मधवलिम-
निजभङ्गभद्रां तुङ्गभद्रां सधुर्धुरारवमुत्तानकर्णयुगलमुत्तम्भितग्रीवं प्र-
तीरैकदत्तदृष्टितीर्णेषु तुरङ्गमेषु सफूत्कारं कराग्रसमुत्कीर्णशीकर-
निकरं मन्दं मन्दतरमुत्तस्ततरेषु हस्तिवरेषु संतीर्य स्वयमप्युत्तरैतटे
विद्यानगरकारिकोणपुरपर्यायनामधेयां समृद्धसर्वापणानुबन्धां प्र-
विनयं किष्किन्धां सत्यसंधो वसुन्धराधुरन्धरोयं प्रत्युन्नतस्तत्र
समेधमाने राजवंश्यजनैर्निखिलजगच्छ्लाघ्यरामणीयकं तत्र कंचन
तुङ्गभद्रातरङ्गमन्दानिलदत्तसपर्याविशेषं कलिततोषं चिन्तामणी-
श्वरक्षेत्रापरनामधेयं कपिलाश्रमं नाम प्रदेशं विविधदेवालयनिबि-
डितसदेशं प्रविश्य विलोकयन् कमलपालिकामधुरमधूलिकापान-
केलिकामुदितमं भरतातिजम्भितझंकृतिवाचालतया निराबाधवि-
हरमाणमहामत्स्यपुच्छविघट्टनचलाचलकह्लारतया च सचाटुव-
चनं सशिरःकम्पं सन्निहितचिन्तामणिक्षेत्ररामणीयकं श्लाघमाना-

१ चिरपिल्कः । २ प्रतीरं तटम् । ३ पारतटे ।

भिरिव सौगन्धिकलताभिरभिशोभितां प्रथितभङ्गमुद्रामप्यप्रथितभङ्गमुद्रां तुङ्गभद्रां न पुराय न राष्ट्राय न परिजनेभ्यो न बान्धवेभ्यः स्पृहयांबभूव चन्द्रशेखरसपर्याचर्यादत्तचित्तसंवर्द्धिततुलसीकुसुमारामः सगुणाभिरामः सरामोनयन्वसन्तसमयं विविधशुकपिककुसुमोदन्तमयम् ।

मौनव्रतप्रदाता वनप्रियेभ्यः सदेदमुचितमिति ॥
उदयाय तपःकालस्त्वरयन्निव तमेनमवनिपतिम् ॥ १ ॥

तापोधिके खरकरस्य मरुत्प्रचार-
वार्तालवेन रहितेषु दिगन्तरेषु ॥
श्रान्ता अनूरुगमितास्तुरगा बभूवु-
र्मनोस्ततोहरजनिष्ट नितान्तदीर्घम् ॥ २ ॥

शुचिरेष नृपालमखिलतपस्यतीत्यात्ततदवलोकारथः ॥
कलिततपःशुचिरिति भुवि मासः ख्यातः समभ्युदायिष्ट॥३॥

किञ्चित्पम्पादिसरम्यदेशविभवो नासीन्मया लोकितो
द्रष्टव्योहरघुनेति जातकुतुकां संलालयञ्जानकीम् ॥
प्राप्तश्री रघुनाथ एष चतुरो मासान्वसेद्भूपतिः
साम्राज्यं कलयन् मुदात्र पुर इत्यासीत्प्रवादो नृणाम्॥४॥

शुचिमासे शुचिपक्षे शुचिचरितो धरणिपालवर्योयम् ॥
शुचिकिरणशेखरं हरमुपासितुमुपक्रमं व्यधाद्युक्तम् ॥ ५ ॥

विरचितनियमो राजा विरजोम्बरभूषणो जिगाय तदा ॥
भूम्युत्थानिविडरजःकलुषाम्बरभूषणं स राजानम् ॥ ६ ॥

---

१ तुरगगणाः । २ शुक्लपक्षे ।

एकादश्यां नियमादुपासितुं चन्द्रशेखरं नमयन् ॥
उपचक्रमे विजानन् शुक्लं तद्रूपसंख्यादिनमेतदिति ॥७॥

स्रवन्ति मध्यातनिमज्जनानामेवं हि पापान्यखिलान्यपीति ॥
निदर्शयन्त्यामिव तुङ्गभद्राभिधस्रवन्त्यां नियमात्स सस्नौ ॥८॥

रचिताह्निकः स राजा मौनान्वयमात्मनः स्फुटीकर्तुम् ॥
मौनान्वयैकलिताश्चिरमजपत्पञ्चाक्षरीतिदिव्यमनुम् ॥९॥

स्मारयति त्र्यम्बकमिह सैषामियं(?) च तद्ध्याने ॥
द्रष्टव्येतीव विभुः स नासिकाग्रे दधौ दृष्टिम् ॥ १० ॥

चिरमेवं विधाय सुधाकरशेखरचरणनलिनध्यानमाराध्य तं विरचितमहासंहितादिपरायणः निर्वर्तितमाध्याह्निक उपात्ततुलसीकुसुमसम्भारः कल्पितनियमाछवः परिचिततात्कालिकजपकृत्यः कृत्यविदामग्रणीरग्रतश्चन्द्रशेखरसपर्यायामेकेन वपुषा पर्याप्तिममन्यमानतया निजकिरणसंख्याकानि वपूंषि स्वीकृत्य समागतेन सहस्रभानुनेव बहुधतरखचितपात्रनिकुरुम्बेण रमणीयपुरोभागं रत्नपीठमधिवसन्तं रघुनाथमहाराजमनुगृहीतुं धरणीतलमवतीर्णमात्मानमभ्यर्हयितुं रजतधरणिधरेण प्रेषितमिव स्वकिशोरकं निशाधिनाथचन्द्रशेखरसारूप्यावालिलम्बायिषयेव शिरोभागन्यस्तेनार्धचन्द्रेणेव शेखरितं शृङ्गद्वयेन अष्टमूर्तिपदाग्रपरिचरणधुरीणतामात्मनः स्फुटीकर्तुमिव प्रत्येकं खुरद्वयकलितैश्चतुर्भिः पदैः रमणीयं स्फिग्देशालवालनिरङ्कुशोज्जृम्भितान्तःसत्वविशेषलताशाङ्काकरेण स्वच्छेन पुच्छेन मनोहरं वृषवरं निखिलजगदानन्दिनं नन्दिन-

१ एकादशसंख्याकम् । २ सवन्ती नदी । ३ मुनित्वम् । ४ जप्याक्षरयुतः । ५ शिवमन्त्रम् । ६ नासिकक्षेत्रे नामाग्रे च । ७ निकुरम्बः समूहः ।

मधितिष्ठतो निजशेखरशशिकरलक्ष्मीदर्शनासहनमेतदिति रोषादा-
त्मनाधीकृतस्येव तामरस्य(?) हेममयस्य कर्णिकामलङ्कुर्वाणं नि:
र्वाणदाननिपुणं गीर्वाणपरिवृढविनुतगुणं राजहंसमिव मानसता-
मरसमनोहरं मया किलायं कृतचूडामाणिः परमेश्वर इति सं-
जातप्रज्ञावष्टम्भे कुमुदबान्धवडिम्भे तद्गर्वनिर्वापणाय स्वयमेव
परिपूर्णचन्द्ररूपमिवाश्रयन्तं चिरन्तनं सरस्वतीमुकुटाग्रभूषणमहा-
वज्रमणिमिव विद्योतमानं लिङ्गाकारं सान्द्रधीकरं चन्द्रशेखरं
नयनेन्दीवरानन्ददं विरचय्याभ्यर्च्य विविधोपचारैरनुदिनमपि व-
रुणादिगङ्गनानान्तःपुरान्तरचारिणि पूषण्याचरितसायन्तननियमो-
भ्यवहरन्नियमवशाद्भव्यमव्यमेव दिव्यमन्नमनुदिनमपि निजाभ्य-
र्थनया प्रवर्तते सत्रमुखे दत्तसुखे निबद्धकटितटैरास्तीर्णपर्णैर्न्यस्य-
मानपत्रामत्रैरप्रमादैः सप्रमोदैर्विप्रसूदैः कृतेषु करिष्यमाणेषु क्रि-
यमाणेषु समस्तवस्तुपरिवेषणेषु इतोपि किञ्चिदधिकं परिवेष्यतां
भृतं किं त्वयोपार्जितं नश्यति वा त्वत्पित्रार्जितं भ्रश्यति वा आनी-
यतां भूपो यथेष्टं वयमप्यौत्तराहा न दाक्षिणात्या इति जल्पत्सु के-
षुचित्सादरं कृतयुगपदापोशनेषु सर्वेषु मतत्रितयप्रवृत्तेषु शुभवृ-
त्तेषु द्विजवरेषु कोटिशः सन्धीभूतान् भोजनकृते द्विजराजान् वि-
लोक्य द्विजराजनामधेयमात्रजनितचापलरततादृशतत्रत्यभक्ष्यभो-
ज्यलेह्यचोष्यादिवस्तुकोटिरसश्लाघनमेकेन मया कर्तुमशक्यमि-
त्यसंख्यरूपाण्यालङ्ग्य समागतोयं सुधाकर एव शर्करालड्डुका-
व्याजेन आहोस्विद्भूसुराणामपि सुधास्वादानन्दं सम्पादयितुं रघु-
नाथभूपाले विरचितानुग्रहेण निवासक्षेत्रकलितनियतनिवासेन
महेश्वरीरूपेण भगवता प्रेरिताः स्युरमृतकलशा न चेदमीषां क्व

१ तादृशम् ।

तावदीदृशी माधुरीति स्वच्छन्दं श्लाघमानेषु केषुचित्सुगुणोसि त्वं मह्यं यथामनोरथं विश्राणय खण्डलड्डुकानिति कुशले पृच्छति कस्मिंश्चिदाजन्ममनवलोकितैकाक्षरशिरस्कतया सूदपर्यायनामधेयमिति गुणशब्दमजानता तावतैव प्रमोदोच्छूनभुजेनौदनिकेन सादरं यथेष्टं तस्मै दीयमानेषु नैकविधमृद्वीकाखर्जूरखण्डशर्कराप्रचुरेषु विविधभक्ष्येषु नवनीतं देहीति पृच्छत्सु कस्मिंश्चिदिदं नवनीतमेवोष्णतरं वर्तते न हि पुरानीतं स्वाद्यतामिति पायसप्रदानेनान्यथयति तद्याच्ञां कस्मिंश्चन धूर्ते दयालुना राजनिग्रहभीतेन केनचिदानीय दत्तं नवनीतं शर्करामसृणितमेलासुरभिनमास्वादयति तस्मिन्निमे दाधिका एते चूर्लिनोपूपा एते लवणा इमे मौद्गा इमे शार्करा इति न्यस्य गच्छत्सु सूदेषु भक्ष्याणि साज्यदध्याज्यदुग्धनदीमातृकायमाणेषु चिन्तामण्याश्रमपरिसरेषु जग्धार्धकवलोनजग्धकवलांश्चर्वितमनोहराननाघ्रातमोदकानस्मृतनिश्वासानपेक्ष्यमाणाज्यान् काम्यमानलड्डुकान् परिमृज्यमानजठरभाण्डान् क्रियमाणसुरभिलजलपानानाद्रियमाणसुगन्धिन[illegible]न् स्तूयमानभक्ष्यरुचीन् पच्यमानभोजनगद्यान् स्वस्त्यस्तु राज्ञे रघुनाथाय न वयं निजनिकेतनानि स्पृहयामहे तिष्ठन्तु कूपकूर्मा इवानुदितकुतूहला जना गृहेष्वेव न वयं तथा पश्चादेतस्य गन्तव्यमेवास्माभिरिति कोटिशः कृतप्रशंसान् मुहितहृदयान् उदर्दर्शं दृष्टदृष्टान्तरङ्गो मन्दमन्दमितश्चन्दनमितः पुष्पसरा इतः पटवासक इतश्चन्दनतैलमितः पुष्कलकस्तूरीगन्ध इतोक्षता इतो दक्षिणा इतः ताम्बूलानीतः शुभ्राम्बराणीतो राङ्कवाणीति वदत्सु परि-

१ हृदयंगमनम् । २ नवं नीतम् । ३ वमनमः । ४ पुष्पमालाः । ५ कस्तूरीगन्धः ।

जनेषु तद्विरचिता आशिषस्साक्षताः संगृह्णानः क्षणं तत्कथालापदत्तान्तरङ्गो निषसाद ।

चिन्तामणाविवास्मिन्वितरति सर्वार्थमागतार्थिभ्यः ॥
चिन्तामण्याश्रम इति सार्थं तस्य स्थलस्य नामासीत् ११॥

तत्र कवय एनामित्थं मस्तुवन् । तत्र कश्चित् ।

प्रदर्शयति राङ्कवं प्रथमतः स राजांशुकैः
प्रमोदयति नूनथापहरते स्वदत्तां श्रियम् ॥
न दर्शयति किञ्चिदप्यथ ददाति चेच्छाधिकं
नं चाहरति सच्छ्रियं बत स एष राजापरः ॥ १२॥

इतरत्र[१]।

भवान्निष्कपटो दाता वयं निष्कपटार्थिनः ॥
दातृप्रतिगृहीतॄणां समा रीतिरहो इयम् ॥ १३ ॥

अपरत्र ।

दर्पश्चेन्न दया दया यदि भवेन्नौदार्यमेतच्च चे-
न्नैव स्यात्सरसत्वमेतदपि चेन्नो सत्यसन्धा भवेत् ॥
सर्वत्रापि जने समग्रसुगुणं न त्वादृशं कंचन
श्रीविश्वूरधिनाथशेखरमणे कुत्रापि नेक्षामहे ॥१४ ॥

अन्यत्र ।

कामः सुन्दर इत्ययं विजयते लोकप्रवादो महान्
किं तेनास्ति यदि क्षितौ प्रकटितं तत्सुन्दरत्वं भवेत् ॥
तेनानङ्गतया जितं सुललितं लोकस्य संमोहनं
रूपं श्रीरघुनाथभूपतिमणावन्यादृशं बिभ्रति ॥ १५ ॥

इतरत्र ।

---

१ मन्त्रविद ।

यत्त्वं पटं घटयसे विदुषामिह साम्प्रतम् ॥
नैय्यायिकाश्चरित्रं मे चित्रमाहुस्ततो नृप ॥१६॥

अन्यत्तावत्कवीन्द्रो रत्नावल्या स्तौति ।

निर्विघ्नकम्भमिहादधासि कविषु प्रीतिं त्वयायुष्मता
सौभाग्यं बहुशोभनं च दधता स्थैर्यं रिपूणां न व ॥
नित्यं स्यादतिगण्ड एव यदमूः श्रीमान्सुकर्मा भवां-
स्तत्तादृग्धृतिमान् इदं ध्रुवमितस्त्वं शूलपाण्यर्चने ॥१७॥
संप्राप्ते भजतां त्वदीक्षणवशात्सुस्मेरगण्डाननां
वृद्धिं प्राप्य वधूर्मुखं तव जगत्प्रीतिप्रदा जानकी ॥
निर्व्याघातध्रुवाल्हिहर्षणविभो वज्राढ्यभूपाश्रितां
संसिद्धिव्यतिपातक्लेशरहितां सर्वत्र सम्पादय ॥१८॥
वरीयांस्त्वं नित्यं परिघनिभबाहुः शिवतमः
प्रसिद्धः साध्यं ते किमिह शुभमन्यद्विनयते ॥
समिन्धे शुक्लं ते यश इह हि सद्ब्रह्मनिरत-
स्त्वमैन्द्रश्रीर्भूयाश्चिरमसुहृदां वैधृतिहरः ॥ १९ ॥

अन्यत्तावत् ।

श्रीविट्ठलेन्द्रवरपुत्र भवन्महार्घै
दानाम्बुभिर्भवति सन्ततमूर्वरा भूः ॥
नो चेदनेन कटुगर्जितभीकरेण
मेघेन हन्त विपदेन भुवः किमु स्यात् ॥ २० ॥

अथ यथाक्रममेव हरिततरकदलिकापत्रभरकनकसिंहासनाधि-
रूढेन शाणोल्लिखितवज्ररेखास्मेरया धृतधारया सह धर्मचर्यापरि-

---

१ निष्कपटम् । २ रोगः । ३ धैर्यहारी । ४ सर्वसस्यपूर्णा ।

रण्धेन निजगुणानुरूपेण सुवर्णरूपेण शमिततापेन सूपेन(?)सचिवेन जनितजगदानन्दकन्दसरसतरखण्डकूष्माण्डदुर्वारसोवार्दैकफलविविधरसमूर्तवार्ताकतोषितजनजिह्वापटलपटोलशाकुटकालशाकुटशाकैर्माहामात्रै(?) रसैः षड्भिर्गुणैः सुन्दरतरमाकन्दादिफलवृन्दैः सेनाधिनाथैः सहकारामलकार्द्रकमयेनोपदंशेन शाकित्रयेणातिरसैरतिरसैर्मनोहरैर्मनोहरैर्निखिलजगन्मोदकैर्मोदकैः संवर्धितजनहेलिकाभिर्हौलिकाभिरुज्जृम्भितरसाटोपैर्लड्डुकापूपैः परिजनैः परिवृतेन समृद्धदुग्धपक्कधवलतरगोधूमपिष्टपरिकल्पितानल्पमृणालतन्तुसच्छायसेवाभिधभक्ष्यचामरसेवितेन माधुर्यदयान्वितेनाखण्डमण्डदधिखण्डवज्राभरणभूषितेन मारान्तकसीरायुधहीरानवद्यीतिदोरावहधीरेण क्षीरेणाभिषिक्तेन पिप्पलाभिधानधवलातपत्रपरिष्कृतोर्ध्वभागेन महाभागेन जगदुज्जीवनेन समृष्टशाल्योदनमाहाराजेनात्मनेव तोषितान् विरचितग्रन्थान् कल्पितचित्रबन्धान् कवितधुरन्धरान् सर्वविद्याढ्यांश्च विप्रान् बहुमान्य यथोचितं धलधलदनुपममणिसरविसरमुखनिखिलभूषणकनकमयदशमृगतनूरुहवसनधवलपट्टांशुकादिभिस्तत्प्रदत्ताशीःप्रादुर्भूतायां च क्रोधनवत्सरविजयदशम्यां समापिततपश्चर्यानियमः प्रस्थाय तस्मान्नगराद्विराचितपम्पासरोवरनिमज्जनः सेवितकोदण्डधरो नमस्कृतविरूपाक्षः मोनितशङ्करभारतीयतिवरः परिशीलितमाल्यवद्गिरिनिलयरामचन्द्रचरणयुगलीसेवनो यथाक्रमं निर्वर्तितकुमारसेवादिविविधपुण्यचर्यो यथापुरं प्रविश्यानेगुन्दीं पुरीं निर्गत्य निजपुराभिमुखं समन्ताच्च धन्नीभवद्धानिर्घोकारपादातहुंकारत्राणासत्यंकारभेर्यप्रभाङ्कारताळाळिझाङ्कारशातत्यदाङ्कारमातङ्गभीदृक्कारदक्कापटात्कारनादैर्विदीर्णासु दिक्षु प्रतिक्षिप्तकौक्षेयकेषु प्रचण्डेष्वखण्डेषु

१ घर्घरी । २ लड्डूकः । ३ मारान्तकः शङ्करः सीरायुधो बलरामः ।

योबिष्ववासेषु दीपेषु नाग्रत्स्वरूपेषु अतुल्येषु भल्लेषु कुल्लेषु सर्वत्र कल्यैश्च निर्लक्ष्यमुल्लोलकल्लोलमुत्काल्यमानेषु समर्दहानाय वेत्रत्र-जलत्रतत्राथ विरचितनीरानृसिंहसंदर्शनोत्सवः समारुह्य हूण-विरचितधूमशकटमतिमनोजवं दिनाभ्यां द्वाभ्यां सम्प्राप्य नासि-कां प्रवर्तितत्र्यम्बकेश्वरमहारथोत्सवः प्रविश्य विन्चूरपुरं सुखे-न साम्राज्यमनुभवन्विजयतेतराम् ॥ ३ ॥

नीरानृसिंहकरुणाभाराघुनाथभूपतेर्नित्यम् ॥
साम्राज्यायुस्तनुभवसम्पत्तिः सुचिरमेधिषीष्ट भुवि॥२१॥
आनेडुदिक्षितीन्द्रात्तिरुमलनृपतेः प्राप्तसम्मानवृत्तिः
श्रीमच्छ्रीसञ्जया(?)र्यामिधगुरुणा प्राप्तविद्याविलासः ॥
कृष्णां गोदावरीसंवलयितवनपर्त्याख्यपुण्याग्रगण्य-
श्रीमद्रामेश्वराख्यक्षितिपतितिलकास्थानकव्यग्रगण्यः २२
तत्ताद्दक्षात्मकरू(पो)त्तमपुरवसतेर्मुक्कराख्यान्वयेन्दोः
श्रीसीतारामभूमीपतिमकुटमणेस्ताद्दशास्थानभागे ॥
सन्वीभूतैःकवीन्द्रैःसमदकविघटागण्डभीरुण्डनाम्ना-
हूतःश्रीशैल्लताताभिधकृतितनुजो नूल्नदुर्गास्तवासः ॥२३॥
कविसार्वभौमविरुदाकलितः श्रीवेङ्कटार्यसहजातः ॥
रघुनाथविजयमेनं व्यतनोद्दिनमेकमेव कृष्णाख्यः ॥२४॥
गिरिकैरिगिरिविद्युसम्मितिभाजि श्रीशालिवाहनस्य शके ॥
कोचनमर्षाश्विनसितदशमे रघुनाथविजय एष कृतः ॥२५॥
कविवाक्यम् ।

---

१ गिर्द्दैः । २ मुक्तामिवद्व्यैः । शके १७८७

यत्कविना कर्तव्यं तदिह त्वत्कीर्तिभूषणं नृपेन(?)सचि-
रघुनाथविभो कविवरविभूषणं तु त्वदायत्तम् ॥२६ ॥

इति कविकृष्णविरचितायां रघुनाथविजयचम्प्वां पञ्चमो विलासः ॥ ५ ॥

अधिकत्रिंशश्लोका गद्यं त्वेकं विलासके प्रथमे ॥
द्वैतीयिके च गद्यत्रितयं चैकोनविंशतिः श्लोकाः ॥ १ ॥
गद्यान्यत्र तृतीये चत्वारिश्लोककाश्चतुस्त्रिंशत् ॥
गद्ये द्वे चैकोनत्रिंशच्छ्लोकास्तथा तुर्ये ॥ २ ॥
गद्यत्रितयं श्लोकाः षड्विंशतिरत्र पञ्चमे कथितम् ॥
नवदुर्गकृष्णकविना जवेन रघुनाथविजयेऽस्मिन् ॥ ३ ॥

इतिश्रीशैलकुलतिलकवेङ्कटार्यवर्यपौत्रनवीनदुर्गपुरस्थिततातार्यवर्यविद्वच्चूडामणिद्वितीयतनूभुवः कृष्णकविसार्वभौमस्य कृतिषु रघुनाथविजयाख्यचम्पूप्रबन्धः समाप्तः ॥

—:o:o:—

मुद्रितमेतन्मुम्बय्यां गोपाळनारायणजनतया स्वकीये मुद्रालये ।

श्रीः

योधेष्वबोधेषु

रामकृष्णसूरिविरचिता

# भार्गवचम्पूः ।

## प्रथमः स्तबकः ।

श्रीपतिं प्रणमद्वृन्दारकवृन्दाभिनन्दनम् ॥
भवबन्धच्छिदं वन्द्यं वन्दे मान्द्यनिवृत्तये ॥ १ ॥

देवः शारदपद्मकोरकमदप्रध्वंसिपद्माकुच-
प्राग्भारस्फुटचारुपत्ररचनाचातुर्यरत्नाकरः ॥
लक्ष्मीनेत्रकटाक्षवीक्षणशरव्यापारलक्ष्यीकृतः
क्षिप्रं पक्षिपतिध्वजो वितनुतां शास्त्रं प्रशस्तं मम ॥२॥

निर्निमेषपदावाप्त्यै संविशन्ति वनेऽध्वमी ॥
गुणजालधुताः सन्तो धीवरा इति मे मतिः ॥ ३ ॥

मानससंचारिपदा भव्यगुणा भूमिमाश्रिता सरसा ॥
सत्कृतिरपि बहुकाकैः कलहंसीव प्रदूष्यते कुजनैः ॥४॥

तत्र ।

भाव्यालंकृतिहृद्य[illegible]सुपदन्यासोज्झितामस्कृतिः
क्वेयं नूनमनल्पदूषणपदं स्यादेव किं तावता ॥
सन्तः सन्ति सदा यदास्यसरणीसंचारिणः प्रस्फुर-
द्दोषास्तेऽपि गुणाः स्युरम्बुदमुखैरम्भांसि सिन्धोरिव ॥५॥

अस्ति च चतुःसमुद्रवलयमध्यगतसकलवसुन्धराखण्डमण्डनं खर्वीकृतशर्वारिगर्वपर्वतैः विनिर्जितकोपाटोपैः स्फुरज्जटामुकुटविराजितोत्तमाङ्गैः पुरन्दरादिवन्दितवन्द्यसुन्दरमुकुन्दपदारविन्दमकरन्दषट्पदैरविरतनित्यानित्यवस्तुविचारपरवशैर्मुनिजनैर्जनितसौभाग्यं सारिकासारसहंसशुकचक्रवाककोकिलपरपुष्टकण्ठध्वनिभिः पान्थानाह्वयदिवातिरमणीयमसमप्रदेशं कस्तूरीहरिणवराहसमुत्तुङ्गमातङ्गगवयकृष्णसारमृगपञ्चाननप्रभृतिभिर्वनचरैरप्यन्योन्यमवनपरैः पशुभिरधिष्ठितम् अधरीकृतनन्दनवनरामणीयकं निजाविमलकीलालबहुललोलकल्लोलोच्छलच्छालिततरतुपारपवित्रिताखिलराशे(?)जनाभखण्डमुकीर्तिकेतुपटैः स्नानार्थागताकिन्नरीगणनिर्धौतस्तनकुङ्कुमपङ्काङ्कितोत्तुङ्गतरङ्गवत्या भगवत्याः सरस्वत्यास्तीरम् ।यत्र परोपकारार्थजन्मानोऽनेकशाखिनः कमनीयपरिच्छदाः सैनेपा इव पादपाः सन्ति । यत्र च लताः सर्वर्तुपुष्पवत्योऽपि अप्रदोषविकासिन्यो मुनिनिचयावचितकुसुमाः सन्ति ।

चूताश्वत्थकपित्थकुन्दतिलकप्लक्षसन्तानकै-
र्बिल्वानीलनमालतालपनसप्रोच्चाम्रियालेङ्गुदैः ॥

खर्जूरार्जुनभूर्जलोध्रवकुलैराम्रातकाद्यैरपि
व्याप्तं तद्वरभूरिभूरुहगणैर्देवैर्यथा विष्टपम् ॥ ६ ॥
बहुलशकुनि विपुलार्जुनमभितसकृपेभीष्मशतद्रुपदम् ॥
सुबहुशिखण्डिसमधिकं भारतचरितात् सरस्वतीतीरम् ॥ ७ ॥

नूनमीर्ष्याभरादिव तयैव सरस्वत्या ।
अमरपुरसमृद्धिस्पर्द्धया वर्धयित्वा
निजरुचिरतटाकमान्तसौभाग्यभाग्यम् ॥
तदनुभवसमोदत्तापसानां समूहः
समकृतसुरसम्पद्यस्य हः सस्पृहोपि ॥ ८ ॥

कदाचित्तत्र निगमाध्ययनचयनादियजनद्रावधाना विपविप-
मविपयाविपह्यरयप्रसृतविवेकप्राध्ययनानुग्राहका निखिलनिगमा-
र्थपारदृश्वानो वशीकृतकरणान्तःकरणमातरिश्वानो भूरि यज्वा-
नस्तपस्विनोवतेरुर्येषामतिविचित्रतमं चरितम् ॥

भवे रता अप्यभवाश्च केचिद्रमापसक्ता अपि नो रमापाः ॥
हिरण्यगर्भोपसृतास्तथापि हिरण्यगर्भास्तु न ते द्विजाग्र्याः ॥ ९ ॥

---

१ आम्रातको मधुकवृक्षः । २ जगत् । ३ शकुनिः पक्षिः दुर्योधनमातुलश्च । ४ अर्जुना वृक्षाः अर्जुनो भीमानुजः । ५ सरूपाणि सुदर्शनानि भीष्माणि भयङ्कराणि शतानि अनन्तानि द्रुपदानि वृक्षस्थानानि यस्मिन् पक्षे- कृपः कृपाचार्यः भीष्मः प्रसिद्धः द्रुपदः द्रुपददेशराजा प्रसिद्धः । ६ शिखण्डी मयूरः भीष्मशत्रुश्च । [illegible] करणानि इन्द्रियाणि । ८ भवः शङ्करः संसारश्च । ९ रमापः श्रीपतिर्विष्णुः द्रव्यवांश्च । १० जगदुत्पत्तिकरो विष्णुः । ११ हिरण्यगर्भः श्रीमान् ।

संसारतापसंशान्त्यै तपोभित्ते तपस्विनः ॥
चित्रं सततमर्चन्ति श्रीवरं जनतापदम् ॥ १० ॥

अवतीर्य सरस्वतीतीरं वीरुत्तरुणतरुसमुद्भिद्रसान्द्रकुसुमसमूहोद्भ्रमद्भ्रमरमञ्जुसिञ्जनप्रणुन्ना इव स्वयमपि तत्तटपावित्र्यहृतचित्ताः मखार्थं मन्त्रयामासु ।

इतो भूमी रम्याऽसितमृगपदाङ्कैरतितरा-
मितो दर्भाः शश्वद्धारित इह नीवारपटलम् ॥
इतो वातः सारस्वतजलकणान् मूर्छति वहन्
पिकः प्रोच्चै रम्यं मधुसमयमावेदयति नः ॥ ११ ॥

अपि चास्माकम् ।

यज्ञसम्भारसौलभ्याद्विलुम्पन्मनसामिह ॥
वृत्तिमुत्साहयत्येतत्तीरं सारस्वतं क्रतौ ॥ १२ ॥

तद्युज्यतेत्र यज्ञभागभुजः सुधाभुजः सभाजयितुम् । ततः ।

युक्तमित्येव ते सर्वेप्यनुमान्य समुत्सुकाः ॥
समग्रां सत्रसामग्रीं कल्पयांचक्रुरञ्जसा ॥ १३ ॥

अनन्तरं कर्षणादिना भूशुद्धिं विधाय विरचितश्च ।

तत्राञ्चिन्हवदुन्नतोन्नतचतुर्द्वारः सुधारञ्जितः
प्रत्यग्रस्फुरदाम्रपल्लवभरंकूसोल्लसत्तोरणः ॥
मञ्जूपैरभिशोभितश्च निगमध्यानैरुदारो पृथु-
र्मान्वंदाः कुशनिर्मितास्तरणवान् रम्यः क्रतोर्मण्डपः॥ १४ ॥

अग्निशालायां च गार्हपत्याहवनीयादीनां शरणानि मेखलाभिरुपशोभितानि विरचय्य ।

ततः स्नात्वाथ सलिले सरस्वत्या मुनीश्वराः
कृतजप्याश्च ते विप्रा यज्ञवाटमुपागमन् ॥ १५ ॥

प्रविश्य तस्मिन्विशालेपि सशाले मण्डपे प्रागग्रेषु दर्भेषूपविष्टाः प्रविभक्तकार्याधिकारा मुनयो महता पुण्याहघोषेण दीक्षां प्रवर्तयामासुः । तत्र प्रथमं मुख्यदेवतोद्देशेन क्रियमाणे सङ्कल्पे विकल्पस्तेषामन्तःकरणसदनं मदमत्तमातङ्ग इवोच्चशिलोच्चयदरीमध्यमध्यतिष्ठन् हरिहरविषयः ।

जगतामीश्वरत्वेन त्रयः पूज्यास्तथाप्ययम् ॥
नरः कस्यानुसरणादत्यन्तं क्षेममश्नुते ॥ १६ ॥

इति तथाविधे व्यतिकरे हिरण्यगर्भोपासकाः प्रोचुः । अहो कथमेते पण्डिता अपि हस्तास्थितवस्तुवीक्षणकृते दर्पणापेक्षावतां पन्थानमनुसरन्ति । यतः स्पष्टमेवैतत् ।

येन स्वीयेन धाम्ना ज्वलदनलचलज्ज्वालमालागरिम्णा
पुष्टैरिष्टैस्तपोभिर्लयसमयतमस्तोमलीढान्तराणाम् ॥
नृणां पूर्णात्मबोधप्रमदमविदुषां दृष्टिरुन्मीलिता द्राक्
यष्टव्यः सृष्टिनाथः स तु सततमतः सर्ववेदैकसर्गः ॥१७॥

तदुत्तरं सानुशयं शैवाः ।

यदङ्घ्रिनेक्षार्थागतमुदितवृन्दारकजनः
प्रभाचक्रभ्राजन्मुकुटतटसंघट्टगलितैः ॥

१ स्थानानि । २ यज्ञस्थानम् । ३ व्यसनो हिरण्यगर्भो देवः ( प्रजापतिः ) ।

स्फुरद्रत्नैर्नित्यं जनितासिकतं प्राङ्गणमहो
यदीयं तं देवं भवमिह भजामः सुरवरम् ॥ १८ ॥

तदूर्ध्वं भागवताः ।

यो नेत्रश्रुतिभारतीमसृतिभिर्विज्ञायते नो गुणै-
र्यश्चाम्नायसमूहशीलनपरैस्तात्पर्यवृत्त्योच्यते ॥
तत्त्वानां निचयं प्रविष्ट इति या सम्भाव्यते स्वेच्छया
भक्तानां च भवाय भाविततनुः सेव्यो हरिः सर्वदा॥१९॥

इत्याग्रहग्रहोपमग्रस्तान्तरात्मानो महात्मानः स्वस्वोपासनवासनापरवशतेन परस्परं निजगदुः । ततः केचित् सुविचारशीलनपराः । आः किमेतेन विचाराचतुरेण भवतां विवादेन । तन्निशम्य वैष्णवादयः सर्वेऽप्येकीभूताः । कथमविचाराचतुरत्वमस्मद्विवादस्य यतो ब्रह्मादिदेवतानाम् ।

तिसृणामपि भूरिभाग्यभाजां जगदीशत्वमयं जगाद देवः ॥
स्मृतयश्च ततो वयं प्रपन्नाः शरणं तच्चरणावघापहत्यै ॥२०॥

विवेकिनः सम्यमुक्तं तथापि । यथा वा ।

दीपानामरुणासितादिकाचसारैः
क्षेपेषु स्फुटचषकेषु संस्थितानाम् ॥
दीपत्वं यदि च समं तथापि कान्तिः
श्वेतस्थे बहुलतमा तमांसि हन्ति ॥ २१ ॥

एवमेव निगमस्तुतपदनीरजानां तदुपाधिकृतवैषम्यमुपां तेषामाम्नायाविशेषेऽपि यतस्तूर्णमर्णवपारं संसारनिमज्जनां जन्मिनामज्ञान-

निवृत्तिद्वारा तत्स्वरूपसम्प्राप्तिफलमञ्जसा भविष्यतीति विज्ञानार्थं कश्चित्संप्रेषयितव्यः । ततः सर्वेप्येकमत्यमनुसृत्य को वै प्रेषयितव्यः कश्च कार्यस्य इति च विचारयामासुः । विचार्य च धैर्यचातुर्यादिचर्यावन्तं विधातृपुत्रं भृगुं तद्योग्यं मत्वा तं प्रत्यूचुः।

भृगो याहि क्षिप्रं प्रथितगुणशाली सकरुणो
भवाम्भोरातङ्कोच्चरणशरणोच्चारणपरः ॥
जगज्जन्मत्राणप्रशमनविलासेष्वयमिति
त्रिषु ज्ञात्वेहि त्वं मुनिनिचयमादाय द्युदिवि ॥ २२ ॥

स इत्यमाकर्णितमुनिजनवचनो भृगुः स्वचित्तेऽचिन्तयत् । अहो किमेतत् । छलसाध्यमिदं कार्यं मां मत्युपदिशन्ति । नायं हितोपदेशस्तर्हि त्यजेदेकं कुलस्यार्थे इति सर्वेपि मां महदज्ञानान्धकूपे प्रवेशयन्ति । तदिदमकार्यमनार्यसममवधार्य नावोचत् ।

कथं जगत्पूज्यपदेषु शश्वच्छलक्रियोक्ता भविता समृद्धः ॥
जिजीविषुः प्राणहरं निगीर्य क्रूरं गरं को हि भवेत्कृतार्थः २३

एतन्निशम्य मुनयः । न खमीशानां छलमकार्यं कृत्वापि पापभाक् । यतः स्वार्थं न प्रवृत्तः सर्वलोकशङ्कापरिहारेण परोपकारार्थम् । अकार्यकारिणोपि परोपकारिणो न दूष्यन्ते । शृणु तावत् ।

सशम्भोरम्भोधिं प्रमथमभियातुं पशुपते-
र्विषं किं व्यापारो जगति कथयस्वास्तुतिपदम् ॥
स्तुतस्त्वाष्ट्रप्राणप्रमथनविधातुः सुरपतेः
प्रवृत्तिः सौभाग्यं वितरति परेषामुपकृतौ ॥ २४ ॥

---

१ प्रसिद्धगुणयुक्तः । २ भावद्यौ रोगमर्यादा वा ।

-तस्मात्परोपकारार्थमकार्यप्रवृत्तिरपि न दूषणार्हा । प्रत्युत भीतेष्वपि फलतीति । पश्य ।

सम्प्राप्तं बत कर्दमादिभिरलं कष्टात्कलत्रं हरे-
स्तुष्टादेकमथाच्युतेन धरणीजन्मानमुन्मथ्नता ॥
आदित्यार्थकरेण सार्धमभितस्तेषां सहस्राधिकं
लब्धं कोपि समीहतेष्टफलके लोकोपकारं विना ॥२५॥

तत्तावत् त्वमप्यनया लोककर्तृप्रवृत्त्यापि भविष्यसि प्रशंसापात्रमित्युक्त्वा तूष्णीं स्थितेषु तेषु महर्षिषु ।

अथ परिहृतशङ्कातङ्कपङ्को मुनीना-
मनुनयपटुवाचां वाचमुच्चैर्निशम्य ॥
तदुदितनयधर्मन्यर्पितात्मार्यवृत्तः
सरभसमभिगन्तुं व्यापृतोभूत्तदर्थे ॥ २६ ॥

इति सूरीन्द्रश्रीमद्रामकृष्णविरचितायां भार्गवचम्प्वां प्रथमस्तबकोयं समाप्तः ॥ १ ॥

—०:०—

## द्वितीयस्तबकः ।

अत्रान्तरे । प्रभूतनमनमलिनीतमस्तोमसम्भूतनयनोपरोधसंहारिकनत्करकरः सहस्रकरः समतिक्रम्य प्राचीपुरात्प्रभःसरणिं स्वकरपरिमृष्टवारुणीदिगम्बरः कामुक इव शनैरस्ताचलविशालमौलिमनुससार । आश्चर्यमिदम् ।

पुंसां पांसुलदंशुमानयमहो निर्दोषरागामिमां
मानार्हामपि पद्मिनीं स्वरमणीं त्यक्त्वा प्रतीच्यां रतः ॥
तत्सङ्गाय तदम्बरं परिमृशन् दोर्भिः प्रयात्यग्रतः
कष्टं धामवतोपि तस्य चरितं जारापराधस्तु कः ॥ १ ॥

अपि च ।

कृत्स्नं भूचक्रवालं निजकरनिकरैः सम्प्रशाम्य प्रचण्डै-
श्चातुर्वर्ण्यं च तत्तत्सुविहितकरणे योजयित्वाऽव्यलीकम् ॥
प्राप्ते कालेथ पश्चात्सपदि पुनरयं दीपसंक्रामितश्री-
रस्तं प्रत्येति कृत्वाप्यहह दिनकरः कोकलोकं सशोकम् ॥२॥
अभ्युदये भवति नरः पूज्यो न विनाशकाल इति सिद्धम् ॥
अद्भुतमिदं यदर्घ्यैरुदयेऽस्तमनेपि पूज्यते भास्वान् ॥३॥

इति कौतूहलादनेकविधं तर्कितवत्सु जनेषु । अस्तंगतवति भगवत्यंशुमति अतिबहलतमतमस्तोमसंपूरिताम्बरतलोयं भुवनगोलको रत्यञ्जनकरण्ड इव संवृतः । अथ वा ।

निजकरपरिमर्शोद्भूतनूत्नप्रमोद-
प्रसरसमनुरक्ताद्वारुणीसङ्गसक्तः॥
रविरसितपटेन व्यावृणोद्गन्तुकामो
भुवनमिव सलज्जास्त्वन्धकारच्छलेन ॥ ४ ॥

ततः सुगूढतरप्रस्तरोच्चयकन्दराधिष्ठितेषु वनचरसमूहेषु । भयादिव सञ्चरत्सूपवनतरुकोटरान्तरालतलं विहङ्गेषु । सनदत्सु च काककुलस्पर्धान्धीकृतादिवान्धेषु । मानवतीष्विव मुकुलितासु

१ नेजस्विनः । २ सुखेन यथातथा । ३ चकोर समूहम् ।

कमलिनीषु । प्रियविरहदूयमानसेषु कोकलोकेषु । प्रोद्यद्रूप्ययौवनमदालसाङ्गनाङ्गरङ्गेषु रन्तुकामे रङ्गोपजीविनीव शनैः सञ्चरतीव भगवति मकरध्वजे ।

व्यसने इव सप्तांशुदीप्तजिह्वाप्रदाहिते
नभसि प्रोद्यताः किंतु स्फोटका इव तारकाः ॥ ९ ॥

अपि च ।

भास्वत्कराग्निसदग्धं नभोभस्मेव मेचकम् ॥
यास्तस्मिन्विस्फुरत्तारास्ता हुताशकणा इव ॥ ६ ॥

अथ वा ।

ध्वान्तस्यान्ताय गच्छन्नयविरहयतीं प्राग्दिशं प्रेक्ष्य दग्वा
मूर्यो धुर्यः स्वहस्ताहृतगगनसरस्तारहारानयासीत् ॥
मम्नं तं पश्चिमाब्धौ परयुवतिवशाद्वीक्ष्य पूर्वाङ्कतोरो-
घातभ्रश्यन्मुमुक्तो ज्वलितमिव नभस्तारकाढ्यं वदन्ति ॥७॥

ततः कलावानपि स्वीयकलाकलापेन निखिललोकलोचनानि कुवलयानि चाह्लादयन्नमिताशिखररानितमुदयाचलमूर्धानमारुरोह

रतिनाथसहायतां प्रपन्नः कुमुदानन्दकरः कुरङ्गलक्ष्मा ॥
ककुभां वलयं विभासयन्समुदगादिन्दुरमन्दकान्तिकन्दः ८

नूनमिन्दिराबन्धोरिन्दोर्मदनसहायत्वं श्रिया प्रार्थितेन भगवता श्रीशेनैव प्रतिपादितम् ।

गीर्वाणैः संभ्रमध्य प्रसभमपहृतश्रीः पिता मे कलावां-
स्तत्सूनुर्बन्धुरिन्दुर्मम वितर विभो वित्तिमत्सानुरूपम् ॥

१ षड्वाक्य समूहेषु । २ चन्द्रे । ३ चित्र वर्णम् ।

पश्चाद्वाक्यानुरोधादिति दनुजरिपुः स्वीयसूनोः शशाङ्कं
वीरं विश्वं जिगीषोः सपदि रतिपतेः साह्यभूतं चकार ॥९॥

यातेस्तं चण्डभानौ निशि निबिडतमस्तामसं पूरिताया-
मिन्दुर्नीलाम्बरेणावृतवपुरसितस्यास्यमङ्कच्छलेन ॥
कृत्वैवं मानिनीनां मनसि मतमहो मानमाच्छिद्य चित्रं
भीत्यारूढः कुरङ्गे परिपतति नमस्याशु राजा द्विजानाम् १०

अत्र हेतुः ।

मानाभावात्सपत्न्या अनुनयजनितं सौख्यमप्राप्यमाणं
हत्वा न्यासात्तदिच्छुस्तमथ विनिदधे रोहिणीचित्तवृत्तौ ॥
स्वस्यासौ सन्निधानादपसरति ततस्तत्र विज्ञाय जाड्या-
द्भूयोभूयस्तदर्थे विधुरतियतते नाधुनाप्याप्तकामः ॥ ११ ॥

अपि च ।

वयं विजितदृच्छया विषयसङ्गशून्या वयं
वयं प्रशमितेन्द्रिया इति न गर्वभाजो नराः ॥
स्मरेण जयता ध्रुवं विजित एष तन्नासिका-
विलेपनकृते सुधापर्षक इन्दुरुज्जृम्भते ॥ १२ ॥

सौभाग्यं किल मूर्तमेव ककुभां लीलारविन्दांशितं
लक्ष्म्या देवनकन्दुकः किमु रतेः पात्रं सुधापायिनाम् ॥
शृङ्गारस्य करण्डकः किमुदधेः फेनस्य पिण्डश्चिरा-
दित्थं संजनयन्भ्रमं समुदितः श्रीदामधामा विधुः ॥१३॥

---

१ नक्षत्रराट् चन्द्रः । २ श्रीलुत्पन्नम् । ३ जितकामाः । ४ सुधशब्दः सुधा अमृत चूर्ण च । ५ दिशाम् । ६ क्रीडागेन्दुकः ।

इत्थं तर्कयत्सु लोकेषु भृगुरपि सुधांशुधामधवलितविपुलतान्तरालो वियच्चरचकोरनिचयस्यामृताशनशालामिव सम्प्रवृत्तां त्रियामां समालोक्य विष्टम्भितगमनवेगः सम्पादितसान्ध्यविधिश्च तैरेव तपस्विभिः सह तत्रैव तां निशामनैषीत् ।

कोकानां विरहेण नूतनरतौ सीदन्नवोढाधिना
कान्ताश्लेषसुखानुरक्ततरुणीप्रेमातिरेकेण च ॥
पद्मानां परिमीलनेन कुमुदस्योन्मीलनेन स्वप-
ल्लोकस्वापसुखेन सार्धमगमद्दोषा दिशं पश्चिमाम् ॥१४॥

ततः ।

अर्धोन्मीलत्कमलमुकुलोपान्तनिर्मुक्तगुञ्ज-
त्षट्पादालीकलरवनुतस्फीतसौभाग्यपूरम् ॥
दिङ्मालिन्यप्रसरगरलग्रासकर्पूरगौरः
सुप्तोद्बुद्धद्विजकलकलैः प्रादुरासीत्प्रभातम् ॥ १५ ॥

तस्मिन्नवसरे ।

क्रीडामुत्थितपक्षिपक्षचलनैर्मालिन्यसत्त्वांगतः
सत्कारं वपुषो जनोत्सवमयप्रेक्षास्फुटत्पङ्कजैः ॥
हास्यं चापि विधाय भर्तुपगमाद्यानं विना चालये
प्राची सङ्गतभर्तृकेव समभूदुर्चीर्णचीर्णव्रता ॥ १६ ॥

अपि च ।

खण्डितामिव तां प्राचीमनुनेतुमिवांशुमान् ॥
स्वकरस्पर्शमात्रेण रक्तयानानुरागिणीम् ॥ १७ ॥

---

१ दोषा रात्रिः । २ खण्डिता प्रतिकुला ग ।

बृहत्तिमिरसिन्धुरप्रमथनार्थमुद्गच्छतो
हरेः सपदि कस्यचित् समुपलेलिहानस्पृहा ॥
मुखाद्बहिरुपागता ललितशोणजिह्वेति किं
ततान भुवि विस्मयं तरणिबिम्बमभ्योदितम् ॥ १९ ॥

नभोम्भस्तामिस्रप्रसरदतिमालिन्यशरदः
सहस्रांशोरुच्चैरुदितवति बिम्बे द्युतिमति ॥
तमोनाटद्गोत्राविवर इव संलीनपरमं
मुनीनां यच्चित्ते तदपि परिहर्तुं भृगुरगात् ॥ २० ॥

उपसि सरिज्जले निमज्जनं विधाय कार्यभरादिव संगातमङ्गो-
त्पन्नं नित्यकर्म समाप्य कृतविपयवासनानिधानांस्तपोधनानविल-
म्बितं जिगमिषुर्भृगुः सविनयमिदमभाषत ।

भवदाध्यवचःपथ्यपाथेयपाथिकः पुमान् ॥
पाथोधिमपि वीथ्याम्बुमायं न मनुते कथम् ॥ २१ ॥

तत्कृतकल्याणरचनेन भवदाशीर्वचनेन समुत्पन्नकार्यविधान-
दास्योऽहं निर्विघ्नं गन्तुमुत्सुकोऽस्मि मामनुजानन्तु भवन्त इति ।
अथ कमनीयकीर्तय ऋषयः प्रोचुरुच्चैः ।

पन्थानश्च शिवास्तवामलमते गच्छन्तु कण्ठीरव-
क्रीडादारितदन्तिराजकलभैर्जुष्टां दशामार्तयः ॥
याहि क्षिप्रमुपैहि तात चपलं स्तुत्यं च कृत्यं बुधै-
राश्लिष्टं प्रविधाय सायक इव श्रीकण्ठचापच्युतः ॥२२॥

---

१ सिंहस्य मूर्धसु । २ गुहागतनिर्यातः । ३ सिंहेन क्रीडया उत्पाटितो यः करिणावरः तत्सानाम् । ४ पीडाः । ५ पिनाकधनुषः क्षेपेन ।

तत्तात कृतकृत्यस्य तव क्षिप्रं पुनर्दर्शनमस्तु इति ।

मुनीशानां याशीर्वचनरचनोत्पादितधृतिः
प्रशान्तव्यामोहः सपदि सनितान्तप्रमुदितः ॥
त्रिलोकीसञ्चारक्षमगतिरजस्योधिवसतिं-
प्रतस्थे प्रस्थानोचितविधिमुपास्येष्टफलताम् ॥ २३ ॥

इति सूरीन्द्ररामकृष्णविरचितायां श्रीभार्गवचम्प्वां द्वितीयस्तबकोयं समाप्तः ॥ २ ॥

---

## तृतीयस्तबकः ।

---

ततो भृगुर्गच्छन्नध्वनि कृत्यसिद्धिसूचकान् शुभशकुनानवलोक्य सहर्षम् ।

ध्वाङ्क्षा[1] दक्षिणतः प्रयान्ति सहसा चाषाः[2] पुनः सव्यत-
श्चैतो मोदभरानतं च हरिणी शावेन साकं ययौ ॥
मन्दं गन्धनलौघबिन्दुनिचयप्रोद्भूतभारादिव
वाति श्लिष्टवियोगिनीहृदवनीसीरः[3] समीरः पुनः ॥ १ ॥

तत्सर्वथा कृतकार्योऽहमार्यदर्शनार्थमागमिष्यामीति विचिन्त्य अनेककोटिविमानवलयशालिना त्रिदिवाध्वना विलम्बितपदं संचरन् । ज्योतिष्टोमादिना प्राप्तनाकसौख्यान् सुकृतिमुख्यान्[4] विलोकयामास ।

---

1 मङ्गलः स्थानम् । 2 काकाः । 3 वियोगिनीहृदयरूपायां पृथिव्यां लाङ्गलमिव दुःखप्रद इत्यर्थः । 4 पुण्यवन्मुख्यान् ।

क्वचिद्विबुधसुन्दरीसरसतानसारस्वर-
प्रभूतरसलालसप्रसृतकर्णशृङ्गारकः ॥
क्वचिद्युवतिकोमलावयवसौष्ठवालोकन-
प्रदत्तनिमिषोज्झितस्तिमितनेत्रपङ्केरुहः ॥ २ ॥
क्वचिच्चटुलकोकिलाविकलकण्ठघण्टारव-
प्रतिध्वनितपूरिते महति नन्दनाख्ये वने ॥
स्मरप्रहितसायकव्यतिकरातिभीरुः स्वयं
प्रयाति च मृगीदृशः स्तननगान्तराले जवात् ॥ ३ ॥
क्वचिल्ललितनीविसंत्रुटितहारभाराद्भुत-
व्युदस्तकुचचोलके घटितहस्तमाचालकम् ॥
प्रदष्टरदनच्छदं त्रिदशवारवामभ्रुवा
समं समरमारभत्स्मरजयाय कश्चित्कृती ॥ ४ ॥
इति सपदि विलोकयन्नपंशो
दिविचरकेलिकलाकलापमारात् ।
पुरसदनसदो विनिन्द्य दूरात् ॥
त्वरितपदं प्रययावसज्जमानः ॥ ५ ॥

अपि च ।

गीर्वाणवाणिनीभिः सहपुण्यजनव्ययोपयोग्याभिः ॥
रमतः सुरानमन्यत राजा वाराङ्गनाभिरेव लुब्धान् ॥ ६ ॥

इत्यतिव्रज्य वृन्दारकवृन्दममन्दगतेन तत्पुरस्थान्यतिक्रमितुं धृतवेगे मृगी ।

---

१ वेगेनवधः । २ नीतिज्ञः ।

स्वर्लोकं समतीत्य गच्छति पुरस्तस्मिन्नतर्किस्फुटं
देवैर्वासरमात्रलङ्घितहरिश्चक्रः स सौरो हरिः ॥
किंवा पादपपादपाटनपटुस्तीव्रो नभस्वान्पुनः
काकुत्स्थस्य किमुत्पथाशरशिरःसञ्चारसारः शरः ॥७॥

एवं तर्कितवत्सु सुपर्वसु महर्लोकादिलोकानतिक्रम्य किन्नरैः किन्नरीभिः समं सततं सङ्गीतविनुतरिङ्गत्तरङ्गां गङ्गामेवगाह्याग्रतः प्रतस्थे ।

जनकभवावृत्तान्तं विज्ञातुं व्योमवर्त्मनेव सुधीः ॥
रभसा लङ्कास्थानं विधिसूनुरगात् समीरसूनुरिव ॥ ८ ॥
सत्यलोकाभिधा यस्य सार्थकानन्यपेक्षया ॥
नाभ्यस्येव पितृप्रीत्या नाम राजीवलोचनः ॥ ९ ॥

न यत्र गच्छन्त्यवसंवसंगिनो न नास्तिकाचारपथानुसारिणः ॥
न योगनैष्ठिक्यशमाद्यकारिणस्ते यान्ति येधर्मधनैकशालिनः१०॥

यस्मिञ्छ्रीमद्भगवतो विराड्रूपस्य विष्णोः शिरोभूते स्वीकृताकृतयः श्रुतयः समवलोक्यन्ते । नैतावतैव ।

संवत्सरायनयुगर्तुसपक्षमास-
काष्ठाक्षणप्रहरघस्रमुहूर्तकाद्याः ॥
कालप्रधानमहदिन्द्रियचित्तधर्म-
प्राणादयस्तनुभृतो निवसन्ति यस्मिन् ॥

यश्च ।

---

१ स्रात्वा । २ हनूमान् ।

बृहद्व्रतवतां प्रेङ्खद्विमानैः सर्वतो वृतः ॥
यथा सूर्योदयोन्मीलत्पद्मकोशः शिलीमुखैः ॥ ११ ॥

परिखाप्राकारोच्चतरगोपुरैः सर्वतः कमनीयतमरतमांगि रथकान्तिकल्लोलकलयन् विराजते। यत्समंततः सततवसद्वसन्ताश्रितवासं कारिकासिकुसुमसौरभ्यलुभ्यन्मधुकरनिकरमृदुमधुरझाङ्काराभिसाराव्यापृतविरहाधीरमधुकरीगणपक्षविपक्षे। स्वच्छमानसञ्चलन्मञ्जुसन्तानतरुपल्लवैरनिशं दिव्याङ्गनासंगाविसक्तानां दूनं कृतमारानिडम्बनानि संत्युपवनानि ॥ १३ ॥

यत्र स्वयं सृष्टिविधानदक्षो दक्षादिकाध्यक्षगृहीतशिक्षः ॥
साक्षात्स्वयम्भूर्निवसत्यभीक्ष्णं कः क्षीणधीस्तं क्षमते प्रतोटुम् १४

यस्मिन्निखिलजगन्निर्माणवेदध्यनिघोषैर्विधेरस्ति सभा। यस्यामखिलनिगमार्थपरिशीलनपरिज्ञातधर्माद्यनेकसाधनसमूहपरिहृतहृत्कषायास्तत्क्षणे मोक्षपदप्राप्तिक्षमा अपि स्वोपास्यचतुरास्याभिमत्या सम्प्राप्तद्विपरार्धावसानव्यवधानाः पूर्वचित्त्याद्यप्सरसां मधुमाधुरीसमधुरीकरणपटुमाधुर्यसरसङ्गीतश्रवणजनितानन्दतुन्दिलमनसंस्तापरिवनः सभ्यत्वं भजन्ति। यस्यां च वासवादिविबुधविद्याधरसिद्धगन्धर्वनिजमुकुटतटखचितविमलहीरनीराजितचरणराजीवः प्रजासर्गनोदितप्रजापतिमण्डलो जगन्निर्माणप्रवणान्तःकरणः स्वीयमध्यासनमध्यास्ते। तस्मिन्महताध्वना सञ्चरन् क्वाप्यसज्जमानोद्येव मज्जनहध्वानामीति सज्जमानः सज्जनाग्रणीः पथि

---

१ भृङ्गसमुदाय ।

पथि नमज्जननमस्यानपेक्षो विघटितपट्टकपाटिकाद्वारः समतिक्रम्य इन्द्रनीलमणिविरचितसम्यक्कुट्टिमान्तरान्तरानिबद्धविधुकान्तकान्त्युपहासितभरणं सभाङ्गणमुल्लङ्घ्य भृगुः ।

पारिहृतातिमिरौघं पावकोद्धर्तकीर्ति-
स्वरविरचितभित्तिव्युत्तरत्नप्रभाभिः ॥
अथ झटिति सभान्तं न्यस्य भीतिर्दिवेशे
निजजनकसुहृत्यद्भूतटीमूत्रधारः ॥ १९ ॥

सति कृतप्रवेशे तस्मिन् ।

चिरसङ्गतयोः पितृपुत्रयोः प्रियसङ्गमम् ॥
पश्यामो हन्त द्रक्ष्यामः प्रणयोद्रेकदर्शनात् ॥ १८ ॥

एवं समुत्सुकेषु सभासत्सु भृगुरपि विधातुरविदूरे शाश्वरत्नप्यकृतगुणवर्णनप्रणामः स्वमौढं नाटयन् सार्वज्ञं निजपितरमनवेक्ष्यैव संविवेश ।

सानन्दोपि सवन्दनादिषु पितुस्त्यक्तार्यमर्यादव-
त्सावज्ञं न चकार कारणवशात्तस्मै प्रणामादिकम् ॥
सोत्कण्ठापि चिरागतप्रियपरिष्वङ्गाय लज्जावशा-
दुन्मुक्तप्रणयेव भर्तरि परीरम्भं सतीवाङ्गना ॥ १७ ॥

तत्रावसरे सदःसमक्षमात्मावहेलं मन्वानः स मन्वादिजनपिता कमलासनः ।

रोषावेशकषायिलोचनगुणभ्रूचापवेगच्युता-
पाङ्गोद्दामादिशिखामुखैः स बिभिदे हृत्पङ्कजातं भृगोः ॥

---

१ वार्तस्तरं सुवर्णम् । २ प्रणयः प्रीतिः उद्रेकः अतिशयः ३ गतप्रीतिः ।

नैव स्नेहवशेन ते विदधिरे भेदं मुदा रेमिरे

तस्मिन्नस्तमितास्तु ते पुनरहो मोहस्य चित्रा गतिः ॥१८॥

एवमपि रोषनिःशेषितधृतिर्विधूनमयं निजतनयं दिधक्षन्निव विलोकयांचक्रे ।

आश्चर्यं किमिदमवीरमानसानां
क्रोधो यद्दुरिततरां धृतिं नराणाम् ॥
यस्यास्योदयसमकालमेव चक्रे
सावज्ञं शतधृतिमाशु धैर्यरिक्तम् ॥ १९ ॥

पुनः स्वतनयेऽविनयसम्भवः कथमित्याशङ्क्य चिरं चिन्तयाञ्चकार ।

दक्षा दक्षादयः सर्वे तनया नयवर्त्मनि ॥
अयं कथमिवोत्पन्नः चन्दनात्कुटजाङ्कुरः ॥ २० ॥

विस्पष्टं दुष्टसङ्गेन कष्टं भ्रष्टो हि मत्सुतः ॥
न किं मृगमदामोदो हिङ्गुसङ्गेन नश्यति ॥ २१ ॥

तथाभूतानां केषाञ्चित्सङ्गेनैतद्भावं प्राप्तस्यास्य दुर्गीहत्तेन किमप्याश्चर्यम् ।

काकानां कुरुते नतेन फणिनां दंशेन हिंसाशया
व्याघ्राणामसदाप्लुतः मुखसन्दंशेन चित्तः क्षणात् ॥
क्रोडानामथ रक्षसां द्विनवधाद्दुर्वायुना पानतो
दुष्टानामनयादिदुर्गुणचयाद्धा हन्त को विस्मयः ॥२२॥

---

१ भ्रष्टनीतिम् । २ दग्धुमिच्छन् । ३ दृष्ट्युन्मत्तेन ।

अथ वा नैकस्य सर्वाण्यपत्यानि गुणैः समान्येव भवन्तीति विस्मयः ।

कमलामुधासुधाकरहालाहलशंखवारुणीकारिणः
तरुतुरगधेनुभिषगप्सरसः सिन्धोरपत्यानि ॥ २३ ॥

अपि च ।

त एते सूनवः ख्याता नूनं किरणमालिनः ॥
भिषजावश्विनौ शास्ता यमः क्रूरः शनैश्चरः ॥ २४ ॥
पटीयाननघः श्रीमान् वदान्योपीच्यदर्शनः ॥
विनीतस्तनयः पुण्यैरगण्यैरिह लभ्यते ॥ २५ ॥

तदलं तभूरिसुकृतोहमेव किमेतेन शिक्षितेनेति विचारपरवशे मनसि विमनसि ।

सम्बन्धभाषणमुखाकृतिभिः परेषां
जानन्ति हृत्स्थमखिलं च बुद्धिमन्तः ॥
तत्रार्यधीर्भृगुरतः पितुरिङ्गितेन
स्वान्तं प्रचण्डतरकोपवशं बुबोध ॥ २६ ॥

बुद्ध्या पितुस्तेन कृतावमाने हेतुं विनिश्चेतुमलं न लभ्याः ॥
एवं हि गम्भीरतरान्तरास्ते मारम्भदुर्ज्ञेयविधेयमार्गाः ॥२७॥

एवं स्वपितरि मुनिरुपदिष्टशान्ते कारुण्यादिसद्गुणाभावमनुभूय ततः स्वौद्धत्यपरिहाराय धातारमनुप्रणमन् सरस्वतीतीरस्थमुनिजनादेशकरोहं न ज्ञेयमुद्गतलमित्यनुवेलं विज्ञापयांबभूव । ततः । स निःशेषितकोपपङ्कः पङ्कजासनः सविनयं निजन-

१ लक्ष्मीः । २ बृहस्पतिः ।

रणप्रणतं भृगुमुत्थाप्य शिशिरतममात्मजालिङ्गनानन्दं क्षणमनुभूतवान् ।

कर्पूरः स हिमालयः समलयः क्ष्मानन्दनश्चन्दनः
सप्रालेयरविः शुचिप्रवहतां पूरः सरित्पाथसाम् ॥
स प्रातः शिशिरो मरुत्कमलिनीनालं परेषीदृशाः
पुत्रालिङ्गनपथ्यशीत्यनिवहस्यार्हन्ति नैते कलाम् ॥२८॥
लोकोत्तरमस्येदं दास्यमिति सविस्मयेषु सभ्येषु ॥
निमापितरमनुज्ञाप्य प्रस्थानं चाकरोद्भृगुस्तस्मात् ॥ २९ ॥

इति श्रीमत्सूरीन्द्ररामकृष्णपण्डितविरचितायां भार्गवचम्प्वां तृतीयस्तवकः ॥ ३ ॥

---

## चतुर्थः स्तवकः ।

ततः कतिपयक्षणैः प्रणतजन्मिजन्मार्जित-
प्रभूतदुरितद्रुमक्षयदवस्य गौरीपतेः ॥
शिलोच्चयमगाद्द्रुतं द्रुहिणसूनुरुल्लंसर-
त्समीरणरयाधिकप्रबललोललोलागतिः ॥ १ ॥

ततो विदूरे पुर एव पुरारिगिरिमपश्यत् ।

स्वर्गङ्गोदकफेनपारदसुधाकुन्देन्दुमुक्तास्फुर-
द्दिग्दन्तिनिर्जरधेनुनिर्मलपयःकर्पूरकम्बुप्रभाम् ॥
मुष्णन्नुच्चतरेण कान्तिपटलेनात्युन्नतो राजते
कैलासः सुरधुर्यधूर्जटियशःसंघात एव ध्रुवम् ॥ २ ॥

यत्र ।

नोल्लासः पङ्कजानामविकसनमथो नैवमिन्दीवराणां
योगः कोकाङ्गनानामभिमतिरनिशं कामिनीनां न यस्मिन् ॥
तापः सञ्चारभाजां रविकरनिकरान्नेन्दुपीयूषभाजां
क्षुद्बोधश्चाण्डजानां त्रिपुरहरशिरश्चन्द्रिकासन्निधानात् १
गौरीकर्पूरगौरोरगतुहिनकरोत्साहादिभिः क्षीरगौरै-
र्दृग्दोषान्ताय चात्तं नयनगलफणामध्यमुष्केषु नैल्यम् ॥
नूनं तस्मादिनोच्छस्फटिकमणिशिलाजालशाली स शैलः
प्रावृण्मेघानुकारिद्युतिभरमधुरान्सिन्धुरान्संदधार ॥ ४ ॥

इतो बकुलमण्डलं नवतमालमालामितः
कदम्बपटलीमितस्तिलकतालसन्धानितः ॥
इतश्च कदलीरितो विबुधपादपानां कुलं
पुपोष महतामहोच्छ्रितनगेनानुकम्पाभरः ॥ ५ ॥

इति कौतूहलाञ्चितचित्तः स द्विजः क्षणमवलोकयाञ्चक्रे । तस्मिन्ननवरतवसन्तावतारविस्फारितनवकिसलयकुसुमभराभुग्नब-न्धुरस्कन्धतरुसमारूढकलकण्ठकण्ठध्वनिप्रतिध्वानवति । अत्यु-च्चतरतरुशिखरारूढकिन्नरमिथुनपञ्चादिस्वरगीयमानमहेशयशः-पीयूषमधुरिमाणमास्वाद्यानन्दसन्दोहपरवशतया विगलितस्मृतिः क्षणं बभ्राम । ततः कार्यवशादाप्तस्मृतिर्भृगुः । हरचरणराजीवा-

---

१ सूर्यकान्तमणि-प्रकाशितः । २ बन्धुरी वृक्षविशेषः ( साफल्या-र्थे द्वार ) ।

लोकनोत्कण्ठितस्वान्तैर्विबुधविद्याधरतापसादिभिरनिशमभ्यस्तया पदव्या श्रीमन्महेशद्वारप्रदेशमाससाद ।

भ्रमद्भ्रुकुटिविभ्रमद्विकटचण्डदण्डायुध-
प्रचण्डभटमण्डलीभुजभुजङ्गभङ्गक्षमैः ॥
तुषारगिरिगौरवैः प्रथमयूथनाथाधिपैः
सुगुप्तमनिशं निशाकरकलावतंसानुगैः ॥ ६ ॥

तत्र । निजनाथस्य शिवस्य अनुजन्मा कनिष्ठभ्राता अयं भृगुः पूर्वं रुद्रो भृगुरप्यनन्तरं ब्रह्मणः पुत्रोयामिति सविनयं नमद्भिः प्रमथगणैरनिवारित एव प्रविवेश ।

वारणशतानि विप्रैः प्राप्यन्ते क्षुद्रभूपतेर्द्वारे ॥
द्वारे धनदपतेरपि नैकमपि प्राप वारणं स भृगुः ॥ ७ ॥

अथ चपलपदं सदःसन्निधिं स विधिसुतः समासाद्य अतर्कितकार्यविधानदक्षः शोणाक्षिकोणेन क्षणमपश्यत् यस्मिंस्तत्त्वावमर्शहर्षिततनूरुहैः सनकादिसिद्धसमूहैरनुक्षणमुपास्यमानः स भगवान् भवः सततमास्ते ।

गौरवं गीयते तस्य विमन्यैर्भगतां गुरोः ॥
सद्योजातोपि यः साचामाचार्यपदवीं गतः ॥ ८ ॥

क्व नारीपीनोरःप्रभवपरिरम्भव्यतिकरः
क्व शून्यव्यामोहव्यसनततिरात्मन्यभिरतिः ॥
तयोरेकत्रैव स्थितिमपि निसर्गाद्विषमयोः
सदान्यस्तासूयं घटयितुमलं कस्तदपरः ॥ ९ ॥

---

१ वारण हस्ती निवृत्तिः ।

यस्याद्भुतं चारित्रम् । यः सकललोकमवभयसंहरणोऽपि भवभीमश्च सर्वामरमौलिस्थलीऽयुत्तचिन्तामणिरपि कपर्दी । जगन्निवासोऽपि श्मशानवासः सर्वजगदन्धःप्रदोऽपि भिक्षाशनः । जगत्प्रावरणोऽपि कौपीनधरः । दिक्पालार्पितश्रीरप्यकिंचनः । अहो मित्रपदवीं प्राप्तः कुबेरोऽप्येतत्प्रसादनात् विपुलसम्पन्नरोऽपि लोकेऽकृतघ्नतानिर्भयत्वेनास्य किंचनत्वं कथमुपेक्षते ।

कौपीनेन्दुकपालकृत्तिभसिते प्रेतास्थिमालाविष-
व्यालालङ्करणस्य सद्वृषपतेरर्धाङ्गजायाकृतेः ॥
दारिद्र्यं दधतः श्मशानवसतेर्धन्द्रूक्षकेशः सखा
ख्यातोऽसौ धनदो मुधा बुधजनैर्यो नाभिजातः खलु॥१०॥

अत्र कारणमेतदेवेत्यवगम्यते ।

लोके यत्किल वैभवं तदखिलं गौरीशकारुण्यतो
निःस्वत्वे खलु तस्य कारणमदः शङ्केऽहमेकं पुनः ॥
यक्षाक्रान्तधना हि यान्ति धनिनो नैःस्वं तु यक्षाधिपः
कोशो यस्य सदाधितिष्ठति न किं यास्यत्यसौ निःस्वताम् ११

स इत्थं समीपान्ते तिष्ठन् स्वान्ते एव सविस्मयं तर्कयामास।
ततो भगवानपि चिरादुपगतमात्मबन्धुमवलोक्य सोत्कण्ठम् ।

उत्सङ्गाच्छैलकन्यां त्वरितमपनयन्बन्धुविश्लेषदुःखं
स्वान्तादुत्कृत्य पीठात्त्वरितमथ सुहृत्स्नेहपाशाविव द्वौ ॥
दोर्दण्डौ सम्प्रसार्य प्रसमपदगतिः स्नेहविच्छिन्नचेता
आश्लेषार्थं समायाद्गुह्यसविधमहो मोहपाशो बलीयान् ॥१२॥

---

१ न्यूनः 'कुत्र बीजमंताने'त्यतः । २ कपर्दो जटाजूटः 'कपर्दी'। ३ अभ्य. भ्रमम् । ५ कुबेरः ।

इत्थं नीलकण्ठं निजोपकण्ठं समागतमवेक्ष्य सतिरस्कारं भृगुरवोचत् । श्रूयतामनभिज्ञ ।

स्फुटं प्रीतिर्लोके समगुणवतामेव सुभगा
क्व ते शीलं भूषा चरितमथ वासः क्व च मम ॥
न मां स्प्रष्टुं योग्यः किमुत परिरब्धुं त्वमशुचिः
समीहे सम्बन्धं न तव भव दूरीभव जवात् ॥ १३ ॥

किंच ।

चिताभसितभूषितं विगतशौचमाभीषणं
कपालवदशोभनं शववितण्डमुण्डस्रजा ॥
श्मशानमिव ते वपुर्यदनवेक्षणीयं सदा
सदाचरणशालिनः किल न रन्तुमस्मिन् क्षमः ॥ १४ ॥

एवमखिलश्रुतिनिकरसंस्तुतपदपङ्कजः शङ्करः अकारणं दुरुक्तैस्तुदन्तं भृगुं शोणायमानदृक्कोणेनावलोक्य ।

कोपाटोपावधूतभ्रुकुटितटभवद्दान्तसम्पातदीप्य-
द्भालस्थोदग्रवह्निप्रसरदुरुतरज्वालमालावलीढम् ॥
ब्रह्माण्डं संविधित्सन्निव पवनगतिर्वाडवं हन्तुमुच्चै-
रुद्यम्योद्दामशूलं प्रमथपतिरगादाशु वीतानुरागः ॥ १५ ॥

तं प्रत्यतिपरुषतरमभाषत ।

---

१ अशुद्धम् । २ कुम्भशकलयुक्तः पक्षे भिक्षापात्र( पाल )युक्तम् । ३ संस्तुतपादकमलः । ४ क्रोधवेगेनावधूत भ्रुकुटितट तन्मध्ये उत्पन्नः दान्तसम्पातो दमितवेगो भालस्थः प्रचण्डः वह्निस्ततीव्रनेत्रानलः तस्य प्रसरन्त्यः उरुतरा अतिशयेन ज्वालमालाः ज्वालासमूहाः तेनावलीढं व्याप्तम् । ५ दग्धुमिच्छन् । ६ शिव. ।

सत्रान्नपीवरनितम्ब कथं वतासि
त्वं नित्यहोमभवधूमविधूसराक्षः ॥
किं मर्तुकाम इव जल्पसि मामनल्पं
शूलाहतस्त्यज कुलायमिदं मदग्रे ॥ १६ ॥

एवं भगवतः खण्डपरशोरकाण्डविच्यण्डभङ्गशङ्काशंमिनृशंम-
रोषभीषणानलज्वालावलिषु पतङ्गायितमात्मानमवेक्ष्य स भृगुर्द्रमप्रा-
न्नः सरभसमभयलम्भनाय श्रीशम्भुसम्भावनीयसौभाग्यधुरं भवा-
नीं संस्तवैरदम्भं सम्भावयामास ।

सरम्भसतरसरथाच्चण्डदोर्दण्डसन्मण्डलाकृष्टकोदण्डदण्डाग्र-
निर्मुक्तनालीकरंहस्त्वसह्यस्तशस्त्रासुरस्तोमसम्भावितोदारपादाम्बुजे
ममथितजगदण्डवेतण्डदण्डायुधक्राथावस्फूर्जतप्रोद्भवश्रीतिविस्म-
यनाधिमशान्तिक्षमोदारकीर्तीन्दुभूरिप्रभापूरिताशेषदिग्मण्डले ॥
प्रचलदमलकर्णताटङ्ककोपान्तसच्युतमन्दारकोद्गच्छदच्छप्रभाचक्र-
वालस्फुटोदारसञ्चारलीलाभिभूतोदितग्रीष्मतिग्मांशुतिग्मप्रभे । प्र-
कुपितशिवकोपसम्भ्रच्यवशूरदानैदयोदामदर्पान्धगन्धद्विपोलान-
संदर्शने पाहि मामद्य भूताधिपोद्भवगूढाञ्जलग्रहाग्नि तुभ्यं
नमः ॥ १७ ॥

तदानीमनुकम्पया तदवनाय ।
दरद्योतोदारप्रहसितगुणाकृष्टपुरजि-
न्मनोमीनामानापनयननिधी व्ययमनसा ॥

---

१ कृताय औवरयानं देहामीनि यावत् । २ नालीक बाणाः । ३ हस्ति-
कन्धमन्तम्भः । ४ दरः ईषन्मन्दस्य पीत इव उदारं प्रहसितं हास्यम् ।

मदा भाव्यं यस्याः प्रमथपतिना प्रादुरभव-
च्छिवा साक्षाद्दक्षान्धकदमनकोपप्रशमने ॥ १८ ॥

क्रोधोद्धतान्धकक्षपणविरञ्चिमूर्ध्नो-
र्मध्ये रराज गिरिराजसुता नतभ्रूः ॥
लोकत्रयान्तकरमृत्युमुमूर्षुमध्ये
दिव्या जरामृतिहराऽमृतवल्लरीव ॥ १९ ॥

अत्रान्तरे ।

प्रदोषप्रारम्भे दरविकसदिन्दीवरदलो-
ल्लसल्लीलाजन्याहतिपटुरपाङ्गो नगभुवः ॥
मृगीभ्रंश्यद्बुद्धेर्भयमपनयन्नाविरभव-
द्दृशं कोपाविष्टं शमनशमितारं च शमयन् ॥ २० ॥

तदानीम् ।

प्रभवति मत्प्रतिवाताद्विनिशमसावीति समत्सरमनङ्गः ॥
दुर्गापाङ्गसहायः कोपान्ते शिवमनस्यथाविरभूत् ॥२१॥

ततः पञ्चेषुशरवञ्चितकुरङ्गमनङ्गरिपुमवगम्य विरिञ्चिमुखाच-
पलतरसञ्चलदङ्गुलिकसंचारसञ्चालितवीणागुणनिचयसम्भूतगम्भी-
रमधुरस्वरमाधुरीविडम्बनपटुतरेण सविनयमिदमूचेऽचलकन्या ।

अविदितपरिणामः कर्मणामप्रवीणः
प्रवणमतिरयासौ तेष्वदस्तावदास्ताम् ॥
त्वमसि विदिततत्त्वो दुष्कलस्यास्य कस्माद्
द्विजमनुजमिमं ते देवरं मोभिहांसि ॥ २२ ॥

---

१ अन्धकघातकः शङ्करः । २ प्रवणमतिः नम्रमतिः । ३ स्मरः सुरा-
ताडुरस्यं भृगोर्थोऽशनिनाशः पार्वत्या भृशं दैवत्वम् ।

इति तुहिनगिरीन्द्रकन्यकास्यमवचनपाशनिबद्धहृदिहस्ते ॥
गतवति शमनीश्वरे स सद्यश्चपलपदमपास्मरदस्य दृष्टिपातात् २१

कुपितमृगेन्द्रमुखादिव प्रमुक्त
श्चकितविलोलविलोचनः कुरङ्गः ॥
चपलपदं तमसः परं पुरस्ता-
त्स भृगुरगारमगादघान्तकस्य ॥ २४ ॥

इति श्रीमत्सूरीन्द्ररामकृष्णपण्डितविरचितायां भार्गवचम्प्वां चतुर्थस्तबकः ॥ ४ ॥

—०:०—

## पञ्चमस्तबकः ।

ततोऽस्य मृगः महर्षिः । अहो मुनिवराशीर्वचनकवचेनैवाद्य संरक्षितोऽस्मीति [illegible] पुरस्तेन सा गाशिमरश्यत् । किमिदानीं [illegible] प्रसार्य श्रीरमणचरणारविन्दारागलालसानां महाभागवतानां शरत्किरणमालिम्पद्दोस्वर्भूमिः गैमान्तरा [illegible] सर्वतः परितं श्रीमद्दारुणादर्श [illegible] ददर्श ।

मन्दा यतिनगरं पुराणपुरुषाय्ये पुराणैः स्तुतः
श्रीशो यच्छरदिन्दुसुन्दरगदाधरपद्मचारांनिधौ ॥

---

१ थां बिन्दोः । २ गतातहरांत. । ३ रितानै. दानैः । ४ पुगन्दुर-
५ र्द विभ्नु. ।

ते मायापटलं व्युदस्य विगलत्तापत्रयाः सर्वतो
वैकुण्ठं खलु यान्ति नैवमपरे सारतरैः साधनैः ॥ १ ॥

किंच ।

नमन्नमुचिसूदनस्फुरदुदारमौरयुंछस-
न्मणिप्रकरसंवलद्बहलकान्तिनीराजिते ॥
हरेः पदसरोरुहे रतिभृतां न भूयो भवो-
द्भवो भुवि भवान्तरद्रुवनमाग्यभाजां सताम् ॥ २ ॥

अपि च ।

यस्याः शोभनशोणकूणितचलदृक्कोणनैसर्गिक-
श्लक्ष्णापाङ्गतरङ्गितेक्षणकृते यक्षेन्द्रदक्षादिभिः ॥
तप्यन्ते नितरामुरीकृतमहायत्नैर्यदावासतः
सा श्रीराश्रयते श्रियं श्रितनुतां लोकः स कैः स्तूयते ॥३॥
यत्रत्याः पशुपक्षिणोपि नितरामानन्दचिन्मूर्तयः
सर्वे शर्ववदुर्वनुग्रहजुषः क्षीरोदकन्यापतेः ॥
धन्यं तद्धि पशुत्वमेव महतां शोच्यं न यत्संमतः
श्रीशानुग्रहभाजनं तदितरव्यर्थं सुरत्वं दिवि ॥ ४ ॥
वैचित्र्यात्कर्मणां यत्र वैनाश्यं नैव जन्मिनाम् ॥
नूनं मनोविनोदाय श्रियः कान्तेन कल्पितम् ॥ ५ ॥

अपि च ।

यत्रारामसुरम्यसीमविलसत्कासारतीराश्रितो
हंसीभिः स्मरदीपदीपनवरैर्भावैरपि भ्रामितः ॥

---

१ भक्तिभाजाम् । २ भवोद्भवः जन्मप्राप्तिः ।

हंसः कंसनिषूदनस्य यशसा मालापमालामिव
श्रुत्वोद्यत्कलकण्ठकण्ठनिनदं तत्याज रत्यादरम् ॥ ६ ॥
अधरीकृतामरीजनगानझरीमाधुरीधुरीणापि ॥
हरिचरणशरणमनसां न मनःक्षोभाय मधुकरी गीतिः ॥७॥

अपि च ।

प्रोन्मीलन्नवपुष्पपल्लवफलोदारर्द्धिभारानतै-
रर्थिप्रार्थितकिंचिदर्थनिवहाधित्वयमर्दैः पादपैः ॥
स्वच्छा या सुविहारधीरमनसामस्तमरोहं पुन-
र्यत्राकारि मनोभिवाञ्छितफलासिद्धेरभावः सदा ॥८॥
ग्रावाणो मणयो यत्र धेनवः कामधेनवः ॥
तरवः कल्पतरवो नराः श्रीशाः स्त्रियः श्रियः ॥ ९ ॥

स तस्मिन्नात्मजः सुविशुद्धसुधामधवलिमाधरीकरणपटुधि-द्धसौधावलीमध्यविन्यस्तदारताध्वना अतिविमलकान्तिकान्ता-जनसहचरसिद्धगणगीयमानानवद्ययशः संशृण्वन् नमद्वृन्दारक-वृन्दसंमदसभ्रमन्मौलिसंघविगलदनेकरत्नावलीसैकतचित्तं श्रीपते-र्द्वारमदेशमाससाद ।

द्वारे हीरमयराकिरणोद्योतिते पार्णोघ-
व्याप्ते श्रीपत्यनुचरवराधिष्ठितेपि द्विजाग्र्यः ॥
चित्रं लेभे श्रुतिविदपि नो वारणं तत्र हेतु-
र्यस्मिन्नित्यं निवसति विभुर्वारणोद्धारदक्षः ॥ १० ॥

१ चन्द्रह । २ वंशितान्दम् । ३ अप्सरआदि । ४ धुरीणा अग्रस्थाना-पिता । ५ भृङ्गभार्यावः । ६ ज्ञिगाः । ७ इलिमधुदायचशारी पदे नाल-मन्तर्गमत्र विरच. । ८ मगेन्द्रमौहर्तैसर्वः ।

तत्र सम्प्राप्तोऽनिवारितप्रवेशः स विप्रः क्षिप्रमन्तर्भवनमाविवेश ।

प्रभूताकिरणावलीलसदनेकरत्नोपलैः
स्फुटं घटितकुट्टिमं चतुरदूतसंवेष्टितम् ॥
तदङ्गणमतीत्य स त्वरितमाविवेशाग्रतः
प्रभोः शयनशालिकानिकटमुत्कटोत्कण्ठया ॥११॥

तत्रानेकशतमणिमयस्तम्भराजिविराजितान्तरालां रुक्ममयकुड्यसंव्युप्तदीपमणिदीपांशुजालविदलितनिःशेषतिमिरोपरोधां गवाक्षरन्ध्रनिर्गतसुरभिधूपामोदसुरभितहरिदन्तरालां सुविशालां शयनशालां प्रविश्यापश्यत् ।

पर्यङ्के सुरधेनुनिर्मलपयःफेनायमानोन्नम-
त्नोयत्कान्तिमदुत्तरच्छदवति प्रत्वापदत्तक्षणः ॥
पद्मालोलकरोपलालितपदः प्रद्योतमानः प्रभुः
शेते दीर्घसरोरुहोद्भवमरुच्छीर्षाणनायत्तनुः ॥ १२ ॥

तथाभूतं तमवलोक्य रुष्टो मुनिः । अहो कष्टमैश्वर्यमदपुष्टोयं धृष्टतया स्पष्टमस्मद्विधगरिष्ठागमनेपि नष्टवदमन्दां निद्रामनुभवति ।

गृहमागतवति पूज्ये मुनिविनयसद्धर्मतत्परैर्मनुजैः ॥
प्रत्युत्थानादिविधिर्नूनमनुष्ठीयते न मदमत्तैः ॥ १३ ॥
विद्याभिजनजन्मोरुपरपौवनवृद्धिनाः ॥
मदाः सर्वेपि नार्हन्ति श्रीमदस्य कलामपि ॥ १४ ॥

एवं मत्वा विवृतनयनः सञ्चलद्दन्तवासा-
रोषावेशाकलितमनसा निःश्वसन्नर्तितभ्रूः ॥
धावन्नुच्चः सरभसमहो श्रीमनोहारिविप्रः
श्रीशास्योरःसबलमघृणः स्वाङ्घ्रिणा संतताड ॥ १५ ॥

ततः प्रबुद्धो भगवान् ब्रह्मण्याग्रणीः करुणापीयूषरसपूरित-स्वान्तः स्वान्तिके प्रान्तारक्तनयनमम्भोजभूतनयनमवेक्ष्य तत्कृतासत्कृतासत्कृतिमविचिन्त्य निगमागमपारावारपरिशीलनैकच्छदच्छमतिविभवमहानुभावबुद्धिसिद्धान्तितापवर्गप्रदविप्रानुवृत्तिरूपसद्धर्मं जनसंग्रहार्थं स्वयमाचरन् चपलपदं पर्यङ्कादुत्तीर्य सविनयमवनिसुरचरणकमलमुपसृत्य नमयाञ्चकार ।

पर्यङ्कोपर्युपावेश्य द्विजवर्यं तमार्यधीः ॥
सुरवर्यः समर्याद्यमुदारं वक्तुमुद्यतः ॥ १६ ॥
धन्योऽहं कृतकृत्यतामुपगतस्त्वत्पादसंदर्शनं
जातं मेऽतिचिरार्जितोरुसुकृतादद्यानवद्या जनिः ॥
किंवा दुष्कृतमस्ति यन्निकृतवान्प्रत्युद्गमप्रश्रय-
प्रत्युत्थाननमस्कृतीश्च कुशलप्रश्नं च तत्क्षम्यताम् ॥१७॥
आरीतागस्यनभिज्ञे कुप्यति न दीनवत्सलाः सन्तः ॥
श्वासं विनैकमब्दा निद्रितमृतयोश्च कः पुनः पिशुनः॥ १८॥
प्रभूतदुरितावलीविदलिताघ मे दौर्भगं
प्रणष्टमभवज्जगत्यतुलकीर्तिरत्युज्ज्वला ॥

१ स्वसमीपे । २ ब्रह्मणः पुत्रम् । ३ ब्राह्मणपादकमलम् । ४ ... ५ कृतापराधे ।

जगत्त्रितयपावनो भुवनपालनाविर्भव-
द्बलस्तदखिलं भवच्चरणपद्मसंस्पर्शनात् ॥ १९ ॥

किं च ।

भवेदाशीर्वचनाज्जरया प्रतिमुकुलव्यपदकमला ॥
चपलापि नैव मुञ्चति कमला मां तदनुरागहीनमपि॥२०॥
छायेवातिचला रमा कथमहं कुर्यां पुराणः पुमाने-
तस्याः परिपालनं त्विति परा चिन्ता ममाऽसीत्पुरा ॥
अद्य त्वत्पदमुद्रया तदवने दुर्भेद्यया शक्तया
संवृत्तोस्मि गतज्वरोत्र किमहं प्रत्यर्पये भो तव ॥ २१ ॥

किंच ।

मया प्राप्तं युष्मद्विधविबुधभूदेवचरण-
प्रसादाद्वैकुण्ठाद्यखिलबृहदैश्वर्यमतुलम् ॥
अतः सर्वस्वस्याप्यहमहह विश्राणनविधौ
भवेयं किंवालं किल समुपकर्तुं च भवताम् ॥ २२ ॥

अपि च ।

सुजातसरसीरुहान्तरदलान्तसन्मार्दवा-
धरीकरणपञ्चमं चरणपङ्कजातं तव ॥
स्वभावपविनिष्ठुरं प्रबलदानवेन्द्रायुध-
प्रघट्टनपतात्किणप्रकरशालिवक्षो मम ॥ २३ ॥

तदेतन्मद्वक्षेनातिदूनं ते भवामीति नितान्तचिन्ताचित्तस्य मे मानसं दुनोतीति प्रत्युत सोप्युनस्तत्पदमङ्के निधाय शैत्तमेन स्वपाणिना सशङ्कं पपर्श । नूनमत्र ।

---

१ दानविधौ । २ पविर्वज्रम् । ३ कल्याणतमेन ।

न भायो निःशंके श्रीस्पर्शिन्येव सेवनीयत्वम् ॥
हरिरप्यतः सिषेवे स्वस्योरसि रमाभिमृष्टपदम् ॥ २४ ॥
स्पर्शमणिर्निजधातुकमपि सदयमयोपि हेमतां नयति ॥
हरिहृत्सङ्गा सगुणा द्विजपदमपि सेव्यतां तथा कमला॥ २५ ॥

किंच ।

हरेरुरसि संस्थितामपि निजाङ्घ्रिभानिन्दिरां
यदा भृगुरतिस्फुटं विरतिमत्त्वमस्याद्भुतम् ॥
ध्रुवं ननु तदादिकं द्विजपदापलब्धेव सा-
वतिष्ठति न तत्करेपि सुचिरं प्रयत्नार्जिता ॥ २६ ॥

ततः पुनः सवितर्कं भगवानाह । अहो बत तमोमुद्रया नि-
द्रयाद्य मुषितोस्मि ।

अभद्रेयं निद्रा बत भवलतामिस्त्रपदवी
बलाद्बालाबालानपि विपुलमोहं वितनुते ॥
तदेनां देवो वा न खलु मनुजो वातिविभूया-
रमाविभ्रम्भ्रष्टो भवति सुकृतेभ्यस्त्वहमिव ॥ २७ ॥

पुनः सविनयम् ।

भो विद्वन्कुरु मय्यनुग्रहमिह प्राप्तोसि कस्माद्भुतं
तत्कार्यं वद साधये महदपि प्राणेन चार्थेन च ॥
वैकुण्ठं भपुनीहि पादरजसा विभास्तु मद्दैवतं
जीवाम्येष तदर्थमेव भवतां दासोस्मि निष्कैतवैः ॥२८॥

इत्येवम् ।

---

१ अधःक्षेत्रम् । २ बालाबालान् बालान्वृद्धांस्तरुणानपि । ३ निष्कपटः ।

मधुरपदध्वानिलालितां कलितसुवर्णामलंकृतां सरलाम् ।
ब्राह्मीमनवद्यगुणां गिरमवदन्मनोहरां श्रीशः ॥ २९ ॥

ततो ब्रह्मण्यदेवस्य श्रीपतेः प्रसन्नमुखराकासुधाकरकरोपानिष्यन्दनातिमधुरवाक्सुधाझरीसुरसमास्वाद्यापि द्विजचित्तचकोरस्तृष्णान्तं न जगाम ।

प्रमोदादुत्तिष्ठद्विपुलपुलकालंकृतवपुः-
कलोन्मीलच्चक्षुर्विमलगलदानन्दसलिलः ॥
पृथुप्रेमोद्गाराकलितहृदयो गद्गदगलः
क्षणं तूष्णीमासीद्भृगुरुचितवामक्षमतया ॥ ३० ॥

ततः समाविर्भवत्प्रेमरसप्रसरपरवशं मानसं कृच्छ्रात्संस्तभ्य प्रभूतानन्दसन्दोहोद्भवद्बाष्पधारापिनद्धाक्षिणी प्रमृज्य श्रीमद्भगवतो वैकुण्ठपतेरकलङ्कमुखराशाङ्के दत्तचक्षुर्बद्धाञ्जलिर्भृगुः ।

वक्तव्यं किमु कञ्जनाभ[1] यदहं निर्हेतुकं ते रमा-
वासे वक्षसि साहसादकरवं हन्ताघातं पदा ॥
तन्मे सन्ततिदुष्कृतं न गणयन् यद्वन्दसे सम्यतां
दासोस्मीति वदन् कृपाम्बुनिधे ह्येतत्त्वयैवोचितम् ॥३१॥

अहो आश्चर्यमकारणकृतापराधितया परिवादार्हमपि[2] मां स्तौषि यतः ।

स्तव्यताव्यक्तमव्यस्ता व्याप्ता गुर्वनुवर्तिभिः ॥
पदा पितामहं[3] हत्वा पितामहमगां कथम् ॥ ३२ ॥

---

१ कमलनाभ । २ निन्दायोग्यम् । ३ भृगोः पितामहो विष्णुः ।

सर्वांगर्वसुपर्वशर्वबलभिद्दुर्वादिकव्यादिभि-
र्दिव्यश्राव्यसुकाव्यनव्यकृतिभिर्यस्तूयसे सर्वदा ॥
स त्वं सत्त्वनिधेऽसि किं मम पदस्पर्शात्कृतार्थः परं
ज्ञातं धर्मभृता त्वयाद्य महता ब्रह्मण्यताविष्कृता ॥२२॥
स्वेनावाप्तसमस्तनिस्तुलगुणग्रामोऽसि किं वाददे
त्वामाशीर्वचनं तथापि सेरिते देयं यथा तज्ज्ञम् ॥
स्वस्त्यस्तु द्विजभक्तिरस्तु भवते श्रीरस्तु वास्तु क्षमा
वीर्यं धैर्यमपारमस्तु विजयः शान्तिर्यशोऽस्त्वस्तु शम्२४
भो सङ्कटजनैकवत्सल जगद्धातर्धरोद्धारक
श्रीश स्वाश्रितकामपूर करुणापीयूषपाथोनिधे ॥
मामागस्कृतमद्य पाहि करुणापाङ्गेन येन त्वयाऽ-
प्यब्रह्मण्यकरीन्द्रमूर्धसु कृतं शार्दूलविक्रीडितम् ॥२५॥
मयि कुरु कृपावलोकं करुणाकर मामकोयमिति बुद्ध्या ॥
उचितं वाक्यमपरं मामनुजानीहि माधवे यामि ॥ २६ ॥

ततः सरस्वतीरोधसि तापससमूहसन्निदेशवशादागतेन मया भवत्प्रसादात्कृतकार्यत्वमवाप्तम् । इति पुरुषोत्तममनुज्ञाप्य शिरसा तच्चरणावभिवाद्य तं प्रदक्षिणीकृत्य समुदयानुरागाकलितचित्तः स विप्रः क्षिप्रतरं प्रतस्थे ।

इति श्रीमत्सूरीन्द्ररामकृष्णपण्डितविरचितायां भार्गवचम्प्वां पञ्चमःस्तबकः ॥ ५ ॥

---

१ सरिति मर्षे । २ कृपितांशाऽत्रा । ३ सम्यगुदितप्रीतिव्याप्तमनाः ।

अथो विष्णुपदमेवैकं सेव्यमिति गाढमतिर्भृगुः विष्णुपदात्म-स्थितोऽपि विष्णुपदाध्वना विष्णुपदानुरक्तान्मुनिजनानभिनन्दयितुं भगवत्याः सरस्वत्यास्तीरमाजगाम ।

सोत्कण्ठनीलकण्ठोपकण्ठे मेघोदयो यथा ॥
तथा प्रादुरभूत्तेषामग्रेऽव्यग्रमतिर्भृगुः ॥ १ ॥

महर्षिभिश्च सानन्दगतिमुखमसृविभ्यां कृतार्थोऽयमागत इत्यनुमितस्तानभिवाद्य तदुपादिष्टसुशासनानिर्वाहदपि कुशासनं भेजे-

ततः सत्कृत्य मुनिभिः पृष्टस्तात यथा त्वया ॥
यद्यत्समनुभूतं तद्वदस्व मुनिसंसदि ॥ २ ॥

तन्निशम्य सहर्षं भृगुरवोचत् भवतां भगवतामाज्ञयाहं प्रथमं पारमेष्ठ्यपदं गतवान् । तत्र सदस्यकृतप्रणतिस्तुतिमुपविष्टं मामवलोक्य कुपितात्पितुः सकाशान्मद्रक्षणे पुत्रस्नेह एवालं बभूव । ततः कैलासेऽपि मामागतमवलोक्य बन्धुस्नेहात् परिरब्धुमुपागतो मद्दुर्वचनक्षुभितमना रुद्रः शूलेन मां हन्तुं दुद्राव ।

बन्धुस्नेहः सुतस्नेहस्तयोर्मध्ये परो बली ॥
पूर्वोपकृत्या नश्येत द्वितीयो न कदाचन ॥ ३ ॥

तदातित्रस्तेन मया प्रार्थितया देव्या आगत्य कथञ्चिदहं विमोचितो वैकुण्ठं गत्वा प्रभोः शयनशालां प्रविश्य महान्तमनयमाकर्षमिति साश्रुपातम् ।

---

१ सुशासनं सम्यगाज्ञा । २ कुशासनं विष्टरं (कुशानां दर्भाणा मासनम्) । ३ प्रत्येकस्थानम् । ४ अपकारेण ।

सुप्तं न प्रतिबोधयेदिति विधिं धिक्कृत्य मोहान्मृदु
श्लक्ष्णं पद्मकराधिवासितमुरः सुप्तस्य पत्युः श्रियः ॥
कष्टं निष्करुणं पदाभिहतवांस्तत्रापि शान्तिद्रुमो
यामूचे प्रतिबुध्य वाचमुचितां वक्तुं न सा शक्यते ॥४॥

तदा समुच्छलत्प्रेमभराकलितचित्ततया मयाप्युक्तम् ।

भो संवित्सुखशेवधे गुणनिधे सद्योगिहृत्सन्निधे
कारुण्यामृतवारिधे भवभयत्राणाय दत्तावधे ॥
पापग्रामलनामधेयभजतां दुःखैणसत्पारधे
मत्पद्मा विनिधेहि हन्त करुणां मोहं पिधेहि द्रुतम् ५

करुणाजलदस्य तस्य श्रीनिवासस्य किं किं वर्णनीयम् ।

सा शान्तिः सविशुद्धभाग्यमहिमा स प्रौढिमा सा मतिः
सा सह्वाडवभीकरद्रुतनयः सप्रश्रयः सा कृपा ॥
सप्रेमप्रसरः सुधामधुरिमोद्गाराक्षरालंकृता
सा वाग्यत्स्मृतिमात्रतः स पुलकप्रेमाश्रुपातो मम ॥ ६ ॥

तस्मात् ।

किं देवैर्दिवि दिव्यसम्पदि पदभ्रंशैकचिन्ताकुलैः
किं वा सृष्टिविधानदीनमनसा पित्रा विधात्रा मम ॥
धूलिव्यास्तकपालशूलगरलाद्युग्रेण रुद्रेण वा
सेव्यः सर्वजनैः कृपाजलनिधिर्वैकुण्ठनाथो हरिः ॥ ७ ॥

किंच ।

---

१ दुःखरूप एणो मृगः तस्य पारधिः मृगयाकारी । २ सद्भावनभक्तिः ।

वागासिश्रुतिहस्तमस्तकमदस्वान्तं प्रशान्तात्मना
पुंसात्यन्तहिताय विष्णुभजने योज्यं त्वदम्भं क्रमात् ॥
तल्लीलाकथने तदीक्षणविधौ तत्कीर्तने तच्छुमा-
र्थायां तत्र नमस्तदालयगतौ तच्चिन्तनेहर्निशम् ॥ ८ ॥

अपि च ।

ध्रुवो ध्रुवपदाधिपः शिशुरकारि दन्तावलः
स्वपार्षदसदृश्वरः मकुतिवक्रनक्रार्दितः ॥
परागसि कृते नरोपि दिवि निर्जरो येन तं-
तिकमन्यकृपणार्जनात्सकरुणाद्य नः सेव्यताम् ॥ ९ ॥

किं च ।

कुरङ्गोयमिति भ्रान्त्या व्याधो विव्याध तत्पदम् ॥
मत्यैवाहमसद्वृत्तः पदोरः समताडयम् ॥ १० ॥

तस्माद् व्याधादप्यतिक्रूरकर्माणमपि मां यः स्तुतिपात्रं चकार । तस्मिन् शान्त्येकधाम्नि करुणापारावारे दीनवत्सले हरौ सेव्ये सति ये केवलमुदारार्थमेव धनमदान्धीकृतकृपणधनिकानुपासते तेवीव मन्दाः अहो कष्टं वृत्तं कृपणानाम् ।

प्राणादपि परो येषामर्थोऽनर्थावहश्चलः ॥
तदर्थं हन्त संत्यक्तं पुमर्थचयमर्थपैः ॥ ११ ॥

पश्यन्त्वार्यास्तावत् ।

भो भो याचक दुर्गतद्रुपरशो कष्टं नकारा इमे
त्वद्देहे कति सन्ति तत्कथय मे तस्मिन्महान्विस्मयः ॥

---

१ दन्तावलो गजेन्द्रः २ एतन्नामा व्याधः । ३ धर्मार्थकाममोक्षान् । ४ वित्तपालकैः ।

बाल्यात्तद्व्ययकारके त्वयि पुनस्त्वद्यापि नाभूत्क्षयः
किं जानासि न मूढ सोऽव्ययपदं प्राप्तस्तदन्तः कथम् ॥१२॥

अन्यच्च ।

गतदशनं वदनं ते तदपि कथं वदति नेति चित्रपदम् ॥
अर्थिन्किमत्र चित्रं तत्र रसनवत्त्वमस्ति तद्धेतुः ॥ १३ ॥

अपरं च ।

त्वद्गेहं भूरिसम्पत्कृपणकथममुं ब्रूहि तस्मिन् विचारं
कोऽसौ यच्चाव्ययानां वदति मतमनेकार्थतां पाणिनीयम् ॥
तच्छ्रुत्वा संविचार्य स्वयमहमभवं चाव्ययस्तद्विदित्वा
मह्यं स्वज्ञातिरित्थं सकरुणमभवत्साह्यभूतो नकारः ॥१४॥

अत्राहं मन्ये ।

भोगेनात्र परत्र सद्वितरणव्याजाद्वदान्यः पुमान्
स्वर्वामाधाराबिम्बचुम्बनकृते वित्तं करोत्यात्मसात् ॥
भुङ्क्ते नेन्द्रियलौल्यसम्भवभिया स्वर्भोगभीतो ध्रुवं
नो दत्ते सुविचारशीलनपरो योगीव लुब्धः पुमान्॥१५॥

ईदृशानामपि द्वारि पराशापरवशमनसः कवयोऽपि मुधैवायुर्व्ययं कुर्वन्ति । तदस्तु नामाल्पमीदृशाधमवार्तया मुमुक्षुभिस्तु मुविशुद्धशान्त्याद्यखिलसद्गुणगणाश्रितारम्भमुद्रितान् प्रह्लादीनपि विहाय दीनबन्धुः स एक एव सेवनीयः केशवः ।

भवभुजगभीतिशमनः स्वजनवृजिनभञ्जनो विपद्दमनः ॥
क्षीराब्धिसुतारमणः शरणागतपालनः सुराधीशः ॥ १६ ॥

---

१ अव्ययानामनेकार्थत्वमिति पाणिनीय व्याकरणम् । २ अव्ययत्वात्
३ हता ।

न केवलं ज्वरनिवृत्त्यर्थमेव कटुकायस्येव भवतापनिवृत्त्यर्थमेव सेव्यत्वमस्य किंतु अतिसुभगतया मनोरमत्वादपीति ।

नीलाम्बुवाहद्युतिरम्बुजाक्षो निसर्गमन्दस्मितसुन्दरास्यः ॥
कुन्दद्विजः पीनभुजः सुवक्षा मनोरमश्चिन्तयतां नतानाम् १७॥

किंच अस्य हरेराराधनेऽस्ति सर्वेषामप्यधिकारः ।

देवा वा दनुजास्तथा निशिचरा विप्राश्च शूद्राः स्त्रियो
ये चान्ये कुलकर्मजातिविकलाः पापाः कुयोनिस्थिताः ॥
ते सर्वेऽप्यधिकारिणोऽत्र भजने विष्णोरिन्दिरा सम्पत-
त्पादोद्भूतसरित्पवित्रितजगद्भारस्य भर्तुः श्रियः ॥ १८ ॥

किंच तस्योपासनमार्गोऽपि नात्यायाससाध्यः ।

फलैर्वा पुष्पैर्वा नवकिसलयैर्वाथ सलिलैः
प्रसन्नैः सम्रेमप्रसरपरिदत्तैरपि सदा ॥
सदैश्वर्याद्विकस्वमुखानिभृतस्तुष्यति हरि-
र्दयालुर्दीनानामभिमतभिदं दातुमुदितः ॥ १९ ॥

यस्यानाद्यगुणवर्णनपूर्तिमाप्तुं
शेषः सहस्रवदनोऽप्यनलं बभूव ॥
तत्राल्पपामरजनैः किल तस्य विष्णो-
राराधने कथमनन्तगुणाब्धिपारः ॥ २० ॥

इति स्वानुभूतं वृत्तमत्यादरान्निवेद्य तूष्णींस्थिते तस्मिन् ह-

र्पिततनूरुहा महर्षय सहर्षं तमार्यवर्यं भृगुं मुनीन्द्रमभिनन्द्य स्वसत्रेऽन्यदेवतायजनमनादृत्य श्रीरमणचरणपरिचरणप्रवणान्तःकरणास्तमेवाराधयामासुः ।

सिद्धान्तितं निगमभूपतिना पुरैव
विष्णोः पदार्चनमनन्यमनन्यभक्त्या ॥
निर्णीय तत्तदनुवर्ति महर्षिवर्यै-
रादर्शितं सुखदमार्तिहरं नराणाम् ॥ २१ ॥

सर्वदा कमलोपेतं विचित्रपतनोज्झितम् ॥
कुपदाक्रमणाख्यातं मावरं भज मावरम् ॥ २२ ॥

नखधवलकान्तिररुणं चरणतलं नीलमूर्ध्वमपि यस्य ॥
गङ्गा विधिजा यमुना स पुनातु हरेः पदप्रयागो माम्॥२३॥

इति रामकृष्णसूरिविरचितायां श्रीभार्गवचम्प्वां षष्ठस्तबकः॥६॥

—•:०—

## सप्तमः स्तबकः ।

अथ वैकुण्ठादस्मिन् गतवति भृगौ तदा अत्युत्कटकोपानलकीलाकलितकलुषतरान्तरा विप्रकृतनिजरमणावमत्यसहमाना सती समलनयनापाङ्गावलोकनेन भगवन्मुखारविन्दमुदीक्षन्ती साङ्गुलिभङ्गं साक्षेपं इदमवदत् ।

---

१ अद्वितीयम् । २ पृथिव्याः पदेनाक्रमणेन ख्यातम् । ३ लक्ष्मीपतिम् ।४ मा भवरं इतिच्छेदः । ५ परोपरितनोभागः । ६ कीला ज्वाला । ७ अवमतिः अपमानः ।

द्विजोयमुन्नद्ध इवाजपुत्रो निरागसः शान्तिसुखैकधाम्नः ॥
यदा त्वहन्वक्षसि तेन्यबुद्धिर्निरङ्कुशा विप्रजना हि नूनम्॥१॥

हेकान्त तदेतद्वाक्यविनिपातेनाद्यं दण्ड्यो नोचेदहमितो गच्छामीति । तत्तो ब्रह्मण्यदेवो हरिः ।

निगमागमखगनीडं वाडवकुलमुज्ज्वलं ममैव सुतम् ॥
कथमुत्सहेपकर्तुं तदहं तद्विपादि मद्विपद्दायिते ॥ २ ॥
विप्रमोहभराक्रान्तस्वान्तोहं त्वमपि प्रिये ॥
विप्रवासफलं तस्मान्मम तेपि च निश्चितम् ॥ ३ ॥
यद्यपि त्वं हठादेव मामुत्सृज्य गमिष्यसि ॥
तेषामाशीर्वचःपाशबद्धैव पुनरेष्यसि ॥ ४ ॥

इत्येवं भगवद्वचनसंवर्धितामर्षधर्षितहृत्कमला कमला ।
मत्तोपि यदि ते नूनं मतो विप्रजनः प्रियः ॥
तस्य सद्मनि नैवाहं वसामि तर्वे तन्मतेः ॥ ५ ॥

एवमुक्त्वा सरभसं रुषा वैकुण्ठान्निर्गत्य करवीरक्षेत्रं भुवि निवासाय रोचयामास । ततो भगवानपि तस्मात्कलहान्तरितरमानुनयार्थमादिवराहाध्यासितं अशेषशैलमौलिं शेषाचलमंहसा गत्वा तदनुमतेन तपश्छलात्तत्र निवासमकरोत् । इतः सर्वतः । सुभगतमे वैकुण्ठेपि स्वरूपानन्दनिरस्तव्यामोहप्रसरः सर्वदात्मारामः परिपूर्णोपि रमाविरहव्यालातिव्याकुलीकृतमना मनागपि शर्ममलभमानो मानवर्ती तामेव दूयमानेन मनसा चिन्तयन् स्वभवनत्यागोद्यतमतिरासीत् ।

---

१ वेदशास्त्ररूपपक्षिणां वसतिस्थानम् । २ ब्राह्मणकुलम् । ३ वत्सस्याध्याहारः ।

प्रेमाविलमतिविमलं सत्कुलमकलङ्कशीलमनुकूलम् ॥
लावण्यसरःकमलं सरलमलं किल कलत्रमिह विरलम् ६

ततः श्रीकान्तः स्वकान्ता क नु गतेति वितर्क्य निश्चिनोति।

वर्णनीयान्वयभुवां साध्वीनां सुन्दरभ्रुवाम् ॥
पितुर्वा पत्युरागारं गतिरन्यानयावहा ॥ ७ ॥

तन्नूनं क्षीरनिधेः स्वपितुरेवालयं गतेति निश्चित्य प्रमदासक्तचित्तानामेव व्यवस्थितिरिति लोकान्निदर्शयन्स्वयमेव क्षीराब्धिमुपजगाम । तत्रापि तामदृष्ट्वातिश्रान्ततया शेषपर्यङ्के क्षणं प्रस्वापदत्तावसरोभूत् । तत्रावसरे ।

दैत्यांशोद्भवभूरिभूपति चमूचक्रार्दितां गामिमा-
मादाय त्रिदशास्त्रिनेत्रविधयस्तीरं ययुः क्षीरधेः ॥
कृत्वाग्रे विधिमद्भुतामलपदस्तोत्रैः शनैरच्युतं
विश्वस्तस्वपदाश्रितापदमलं भक्तेष्टदं तुष्टुवुः ॥ ८ ॥

ततः कृपालुर्भगवान् उर्व्यां यदुकुले सर्वेपि सुपर्वाणस्तत्पत्न्यश्चांशेन सम्भवन्तु । ततः सहस्रवदनावामपि शौरिनार्योरपत्यतामुपेत्य भूभारं क्षपयिष्यावः । योगमायापि कार्यवशेन नन्दसद्मनि जनिष्यते इत्येवं ब्रह्माणमादिदेश ।

अर्धानिधानात्पद्मायास्तदानीं जगदीश्वरः ॥
तज्जन्मकथनं नैव कृतवान् परमेष्ठिने ॥ ९ ॥
हरेः स्वप्रियनाशानं भक्तदुःखं सुदुःसहम् ॥
अतस्तदधमुच्यापि श्रितत्राणार्थमुद्यतः ॥ ११ ॥

---

१ सुकुलजाताम् ।

ततो देवानमूनेवं निवेद्य वसुन्धरामाश्वास्य वेधाः स्वधाम प्रत्यपद्यत। देवाश्च सर्वे प्रभोरादेशे तस्थुः। शेषोऽपि शौरिपत्न्यां रोहिण्यामवततार। ततः।

मायापाशादिव च्युतदनुजनिकृन्तने चण्डदोर्दण्डसारः
शौरेः क्षेत्रे च साक्षात्स्वयमतुलगुणः प्रादुरासीदजन्मा ॥
लीलाविध्वस्तकंसाद्यखिलखलमदः प्राप्त दारानुदारा-
न्प्रापीनापद्विमुक्तानकृत परिहरन् भारमुर्व्याः मुरारिः ॥१२॥

श्रीरपि भीमनृपसुता भूत्वा तदवाप्तयेऽनुरागवती ॥
हरये दत्तं समहितोऽभ्युपकर्त्रीरभियाहामिति नूनम् १३

ततः कदाचिद्विहारवत्यां विविधकामकलाकलापोपकरणालंकृतसद्मनि मकरध्वजतल्पविन्यस्तपर्यङ्कमभ्रामिवाधाय राधामङ्के पर्यङ्के निःशङ्कं पुलकाञ्चिताङ्गया तया सह दिव्यं तन्निजदयितमवेक्ष्य रोषदूनहृदयसत्वा पद्मा निश्वसन्ती पुनस्तत्सद्म संत्यज्य लोहदण्डं निर्जगाम।

अपराधे प्रकुप्येत मयि श्रीरिति तद्भयात् ॥
हरावनपराधेऽपि कष्टातो लोहदण्डभाक् ॥ १४ ॥

ततः श्रितजननिर्जरतरुः श्रीपतिरपि तद्विरहपरिश्रान्तस्वान्ततया विहाय स्वान्तःपुरं तदनुनेतुकामस्तामन्वेषयन्ननेकगिरिसरित्कान्ताराण्यतिविदितविगाहितबहुनद्यो दिव्यसन एव पश्चीकृताङ्गदः श्रीवेनयन्तीमीनकुण्डलालंकृतो मार्गवपदमुद्राङ्कितो-

---

१ जुमंदरायां श्रीरे विष्णुः स एव प्रियो यस्य। जुमं दरवशीरं नाम क्षेत्रं तदेव प्रियं यस्या इति वा। २ एतन्नामकं क्षेत्रम्।

रस्थलः स्वप्रियां श्रियमुपलभ्य सानन्दं सान्त्वयामास । तत्रापि विकलानुनयश्चिन्तयामास ।

गृहिणी गृहमित्याहुस्तदर्थं वित्तसञ्चनी ॥
सा विरक्ताथ किं तेन धनेन सदनेन मे ॥ १५ ॥

तदत्र पुण्यतमक्षेत्रे सर्वस्वव्ययेनाहमपि तद्रूपश्चरामीति । तत्रावसरे ।

पितृभजनलीनमनसं मुनिवरमिह पुण्डरीकनामानम् ॥
कृत्वा पुरोधसं निजहृद्गतमस्मै निवेदयाञ्चक्रे ॥ १६ ॥

ततः सोपि पात्रापात्रविचारेणास्येशस्य प्रभूतवित्तव्ययः कथं स्यादिति विचार्य परमकारुणिको मुनिः। ज्ञानविज्ञानहीनानां मूढानां पापिनामपीत्यादिना मोक्षमुपलक्षीकृत्य मद्दत्तासने तिष्ठन्नेव सर्वस्वं प्रतिपादयेत्युपदिष्टवान्।

तिष्ठन्नेवेत्युक्तं मुनिना यत्तत्र हेतुरयमेव
दीनाः सुदवीयांसोप्यस्य कृपालोकगोचराः सन्तु ॥ १७ ॥

मद्दत्तासन इत्यत्र हेतुर्यत्कृपया द्विजैः ॥
दत्तं तदचलं चास्य त्यागानर्हमपि स्फुटम् ॥ १८ ॥

तद्वाग्बन्धः स्वसिद्धामलविमलकलापालिताशेषलोकः
शोकघ्नः स्वाश्रितानामिति मुदितमनाः पुण्डरीकेण दत्ते ॥
तिष्ठन् पीठेष्टसिद्धित्रिदशविधिमुखावासवैकुण्ठसम्पत्सायुज्यादिप्रदानोप्यतमतिरजितो राजते दीनबन्धुः ॥१९॥

द्विजेन पुण्डरीकेण दर्शितेनाध्वनैव यत् ॥

---

१ सुदम् ।

यात्यतः पुण्डरीकाक्षं मेनेहं विठ्ठलं विभुम् ॥ २० ॥

नामान्यस्य हरेः श्रुतिस्मृतिगणैरुक्तानि गौणान्यपि
प्रोद्गीतानि महात्मभिः प्रतिपदं तिष्ठन्त्यलं कोटिशः ॥
[1]तत्राप्यत्र किलादरादुपनिषद्गीतप्रवाश्रीपति-
र्दीनानामनुकम्पयैव विदधे श्रीविठ्ठलेत्याह्वयम् ॥ २१ ॥

जघनाहितपाणिरुन्नतांसो मृदुमन्दस्मितसुन्दरास्यचन्द्रः ॥
समचारुपदेक्षणः शरण्यः स तु मां पातुतमां तमालनीलः २२

तदारम्य अयं क्षेत्रराजोपि अघविध्वंसनस्य श्रीनिवासस्य निवासादघविध्वंसनः । श्रीनिवासश्चाह ।

ये मन्दाः स्वकलत्रपुत्रकनकाद्यासक्तचित्ताः सदा
यात्रामत्र विधातुमक्षमतया नैवागताः कर्हिचित् ॥
तेपि सौख्यमसम्भ्रमादपि बलादश्रद्धया दूरतो-
प्येनं वीक्ष्य यदृच्छयापि च सकृद्धन्याःस्युरुत्कल्मषाः२३

यात्राद्वयमिहेशस्य दिवसे मासि वत्सरे ॥
नियमेनानुतिष्ठन्ति तेऽपुनर्भवभागिनः ॥ २४ ॥

शुचावप्यत्र सङ्गत्य शुचि तिष्ठन्ति किं जनाः ॥
श्रीविठ्ठलकृपालोकात् विशोकाः संभवन्त्यमी ॥ २५ ॥

किंच ।

पद्गना पदविच्युता जडाधःपतना वक्रगतिश्च जाह्नवीयम् ॥
समतां किमु पुण्डरीकनाम्ना किल जह्नुद्विजसूनुना समेति२६

अपि च ।

---

१ विदा ज्ञानेन ठान् शठान् लाति गृह्णाति इति विठ्ठलः । २ आषाढे ।
३ शुचि यथातथा ।

मुकुन्दमुचुकुन्दयो रहसि संविदे ब्राह्मणै-
रवाप्यमितरत्र नैवामिति यच्च सिद्धान्तितम् ॥
तदत्र पदमूर्जितं जगति सूकरेणार्जितं
प्रदक्षिणविधानतः संपदि पुण्डरीकालये ॥ २७ ॥
किं पुनः क्षेत्रराजस्य प्रदक्षिणविधौ फलम् ॥
जानाति दिवि वा भूमौ विबुधोपि न कश्चन ॥ २८ ॥

किंच ।

दशशतवदनोप्यलं न वक्तुं भवतनुजामहिमानमत्र यस्याम् ॥
स्वघृजिनपरिमार्जनाय सद्यः समभिसरन्ति हि मध्यमोह्नि नद्यः२९

अपि च ।

भीमापि या विबुधजनकमनीया तदपि न स्वैरखलेयम् ॥
सुनडापि वेणुनादानुसरणशीलापि बल्लवी नैव ॥ ३० ॥
गुर्वी तीर्थानामपि नीचपथालम्बिनी न पतितेयम् ॥
भवननयापि भवघ्नी तदपि न पितृघातिनीति चित्रमिदम्३१
क्षेत्रेषु तीर्थेषु च दैवतेषु भक्तेषु सर्वेष्वपि संगरिष्ठम् ॥
श्रीपुण्डरीकं त्वय चन्द्रभागा श्रीपाण्डुरङ्गो मुनिपुण्डरीकः ३२
इन्देहं सम्पूर्णमन्देहं देवमस्तसंदेहम्(?) ॥
किं देहं भरमजनैः किं ते त्वं ते समाः परित्रातुम्॥३३॥
बहवः सन्ति सुमनसः स्विष्टा इह कामदाः सकामानाम् ॥
धर्मार्थमोक्षवितरणपटुरेको जयति विठ्ठलो जगति ॥ ३४ ॥

---

१ भीमानाम्नी भयकरा च । २ स्वर्गाङ्गना शब्दकारिणी च । ३ स्वयोः सारभूतां मुक्तम् इत्यपि । ४ भवः संसारः शिवश्च ।

वन्दे देवशिखामणिं कलिमलप्रध्वंसदक्षं रमा-
नाथोद्भासितमौलिमानसलसद्राजीवरोलम्बकम् ॥
यश्चित्तं मुनिपुण्डरीकवचसा बद्धोप्यविद्यागुणै-
र्बद्धानुद्धरते नरान्नयनतो दीनान् दयाम्भोनिधिः ॥ २५ ॥

अविरतमनुकम्पाकम्पदीपोरुकान्ति-
प्रशमितनतपापध्वान्तपङ्क्तिः समन्तात् ॥
विधिविबुधमुनीन्द्रैः सेव्यमानाङ्घ्रिपद्मः
सजलजलदनीलं विठ्ठलं तं नतोस्मि ॥ २६ ॥

आस्तामेतासु सर्वोपनिषदां हृद्यमाद्यं मुनिन्द्रै-
रावेद्यं यत्किमपि तमसः सन्निविष्टं पुरस्तात् ॥
अम्भोदाभं समपदकटिन्यस्तहस्तं स्मितास्यं
तिष्ठद्दल्यङ्घ्रिमिह मनस्याविरास्तामिदं नः ॥ २७ ॥

सान्द्रग्रावेन्द्रनीला किल बहलरजःसंनिहन्त्री जनित्री
सत्त्वानां स्वप्रभावाच्छशितरणितिरस्कारिणी तापहन्त्री ॥
घानन्दा नीलकण्ठाद्यभिमतरचिताविठ्ठलास्यानुकम्पा
पाथोभिस्तर्पयन्ती हृदि वसतु मुदे कापि कादम्बिनी मे २८

पतगपतितुरङ्गः कुञ्जकेलिप्रसङ्गः
कृतनतभवभङ्गः सन्मनःकञ्जभृङ्गः ॥
करविधृतरथाङ्गः पार्वतीशान्तरङ्ग-
श्छविविजितपतङ्गः पातु मां पाण्डुरङ्गः ॥ २९ ॥

१ स्निग्धेन्द्रनीलमणिशाणसमाढ्या ।

इत्थं वा कुसुमैर्मयाल्पमतिना चम्पूरियं निर्मिता
नार्हन्ते वनमालिनास्त्विति वरं व्रीडाजडीभूतधीः ॥
तावत्तत्स्मृतिमागतं तव वचो यद्यत्करोमीत्यहं
तेनावाप्तधृतिस्तवाङ्घ्रिकमले तामर्पये त्वन्मुदे ॥ ४० ॥
कथं वासौ मद्वाक् तव गुणगणौघं गणयितुं
क्षमा क्षामा[1] क्षामीकृतदनुजदर्पाहिकशिपो[2] ।
तपः सम्पत्पूतामितमतिमदैश्वर्यमपि य-
द्यशःपारावारे रज इव निमग्नं महदपि ॥ ४१ ॥
न जानेहं पातञ्जलैकपिलकाणादकमुनि-
प्रबन्धान्नाधीतं[3] नतवरदसारस्वतमपि[4] ॥
तथाप्यद्धा बद्धाः पितरमिव तोकस्य[5] नितरां
गिरो मे रोमाञ्चाञ्चितमथ भवन्तं विदधतु ॥ ४२ ॥
न विज्ञातं ज्ञेयं नहि तव च भक्तिर्न विरति-
स्तमस्त्यागो योगः स्वहितमथकर्मापि न कृतम् ॥
असह्यान्यायानां खनिरवनिभारोस्मि सदयं
दयाब्धे यद्युक्तं तव कुरु तदेवार्थिनि मयि ॥ ४३ ॥
गुणानामन्तस्ते न निगमपुराणागमशतै-
स्त्वया वा विज्ञातस्त्वमसि तदनन्तः किल यथा ॥

---

१ क्षामा अतिसूक्ष्मा । २ क्षामीकृता नाशिताः । ३ पातञ्जलं व्याकरणं कपिलेनोक्तं सांख्यं कणादेनोक्तं तर्कशास्त्रम् । ४ सारस्वतमपि व्याकरणम् । अथवा भट्टशास्त्रादि । ५ बालस्य ।

तथा मे दोषाणामतसिसुमसाधारणरुचे
नचेद्दीनं मामुद्धरसि वद कोन्योस्ति सदयः ॥ ४४ ॥

पिता माता भ्राता तनुजनिरुपास्यः प्रियतमो
गुरुत्राता मित्रं सुहृदपि भवानेव भगवन् ॥
दयालो दीनोयं क्षितितिदयय मामुद्धर हरे
हरे मां संसारव्यसनततिमादर्शय पदम् ॥ ४५ ॥

आर्तोद्धारपरायणत्वमिह ते नैसर्गिकं तद्भवान्
दीनं मां द्रुतमुद्धरिष्यति मयाद्दित्यस्ति मे प्रत्ययः ॥
कैश्चित्किकिलोकलोचनतमःशान्त्यर्थमभ्यर्थित-
स्तमोराशिरसौ सहस्रकिरणः प्राचीदिगन्तर्गतः ॥४६॥

भासत्सद्गुणधर्मणि त्रिजगतां पापापनुत्कर्मणि
स्वेषामर्पितशर्मणि श्रुतिमतोद्यद्धर्मभृद्वर्मणि ॥
शश्वत्पालनधर्मणि प्रियरहः क्रीडेन्दिरानर्मणि
प्रज्ञाताखिलमर्मणीह रमतां द्विट्ठले ब्रह्मणि ॥ ४७ ॥
यत्सेव्यं तदसेव्यं नासेव्यमिति किमर्थना(?) ॥
इति निजमौग्ध्यविलम्बितबुद्धेर्मे तत्समन्तु सत्कवयः॥४८॥

श्रीमद्विट्ठलपादपद्मविगलत्पीयूषधारारस-
स्वादासक्तविवेकचित्तमधुपश्रीरामसद्वंशभूः ॥

---

१ अवसि नाम 'अवम' इति भाषायाम् । २ अन्योन्योपकारकं मित्रम् । ३ उपकारमनपेक्ष्योपकारी सुहृत् ।

ख्यातस्त्र्यम्बक इत्यथास्य तनयः सद्रामकृष्णाह्वय-
श्चम्पूकाव्यमिदं चकार स हरेर्दासोपनामा कविः ॥४९॥

हृद्गतेन निदेशेन ह्यनीशेनापि यन्मया ॥
कृतं युक्तमयुक्तं वा श्रीविठ्ठलमुदेस्तु तत् ॥ ५० ॥

येनेत्थं यत्प्रोत्यैकाव्यमिदं कृतमतीव रसयुक्तम् ॥
तस्मिन्कवौ स विष्णुर्वत्सतरे गौरिवास्तु सुप्रीतः ॥५१॥

इति श्रीमद्भक्तशिखामणिश्रीमद्रामान्वयसम्भूतत्र्यम्बकसुतराम-
कृष्णविरचितभार्गवचम्प्वां सप्तमः स्तबकः ॥ ७ ॥

समाप्ता चम्पूः ।

मुद्रितमेतन्मुम्बय्यां गोपालनारायणजनतया स्वकीये मुद्रा॰

# श्रीः

## श्रीवेङ्कटाध्वरिप्रणीता

# श्रीनिवासचम्पूः ।

—:o:—

## प्रथम उच्छ्वासः ।

—:-:—

वंशोस्ति मुरली तदस्तु भण भो गोत्रं[१] फणीन्द्राचलो
माताहं जगतां भयस्य सविता वामेतरा चक्षु मम ॥
क्वास्ते ते शरणं त्वमेव मुमुक्षोत्येवं हि पद्मावतीं ।
वाचा संवदयन् जयत्यनुकल्पं श्रीश्रीनिवासो हरिः ॥१॥

भवसिन्धुपारगमने कवितामार्गप्रकाशनेपि मम ।
मानवमृगराजगुरोः सेवोडुपतरणिसरणिमावहतु ॥ २ ॥

कविता भुवि तावदेव वन्ध्या भविता यावदयं न वर्ण्यते हि ।
तरसा सुरसालवद्वदान्यः सरसालापवशंवदो मुकुन्दः ॥ ३ ॥

उभोप्यसत्कृतार्यः कीर्तिविहीनोपि पङ्क्तिमुक्तोयः ।
मन्दोप्यशनिकठोरो दुर्जनसंघस्तनोतु मयि करुणाम् ॥ ४ ॥

रसमयजनतोल्लासितं मध्यसमेमत्र शब्दजालं मे ।

---

१. वंशो वेणुः कुलं च । २ गोत्रं पर्वतः वंशमूलं च । ३ ... ४ भविता सूर्यः पिता च । ५ नृसिंहस्य । ६ रसमयाराासका या जनता जनसमूहः तया उल्लासितम् । पक्षे 'र म भ य ज न त' इत्येतैर्गणैरुल्लसितम् । ७ मध्येसम-मम् समाया मध्ये 'पारेमध्ये षष्ठ्या वा' इति समासः । पक्षे 'स भौ' गणौ ।

सद्गुणसंपद्दर्शकमथ भूयाद्वृत्तशास्त्रवत्सततम् ॥ ९ ॥

विजयी भवतु । यस्तु स्वस्यैव चरणवत्कमलोल्लासं दधानः जङ्घावच्छराधिगम्भीरः उदरवद्वलिविभङ्गशाली नाभिवद्दारमभूमनिनिदानवद्योपगूढः भुजवद्भूतोपशोभितः करवत्सवक्रनन्दकः वक्षःस्थलवत्सततया श्रियोल्लसितः कण्ठवत्सन्मालाङ्कृतः मुखवत्कलानिधिख्यातियुक्तः अधरवद्रक्तरक्तः दन्तवन्मुक्तावलिहृदयंगमः नयनवद्रक्तनीलः ललाटवत्ततिलकः कुन्तलवच्छ्यामाधिकरुचिः अवतंसवत्कलापमयः श्रीश्रीनिवासो नाम वसुधाधिपः ।

किंच यश्च रणश्लाघ्यं भुजं ललितांसैश्रियं वक्षःस्थलीं सर्वतोमुखमानशोभान्वितं पादं च वहन्ति । अपि च यः पादे गत्रास्पदं चक्षुः नितम्बे कायणगुणान्वितं नेत्रं वक्षसि विपुलनयनाभियोगं च धत्ते । किंचाधोदेरशोभां कण्ठे कन्धरोल्लसितत्वं केशेषु कुन्तलसंस्थितिं पाणौ सद्दाशयाभिरामत्वं सर्वाङ्गे च धारयति । यं चाङ्गदोल्लसितं सङ्करचितशोभान्वितमूर्ध्मूर्तं रामं रामानुजं चाहुः । येन च दारेणेव बहुविदारणक्षमेण सकलकविराज्यवन्धेनेव अरुणाक्षरमेभाभाजा महावराहेणेव महीभुजा

श्लेषरसङ्गेन मुमुदे प्रजा । यस्मै च माधवाय ललितलताङ्गीकरणयोग्याय उत्कलिकाभिरामसज्जालकोल्लसिता अनेककोपालियतिरमणीया योजना लतातातिरिव रुक्मिण्यादिमहिषीजनतो न केवलं स्पृहयाम्बभूव । किंतु लसल्लीनपयोधरचक्रकृत्ये प्रद्युम्नोद्भवानुकूलाय अक्रूरमानुमुखोल्लासिताय तिरस्कृतकुजन्मने गजमद्दर्शितविक्रमाय तथाविधो गोपालबालजनश्च । यस्माद्बहुलपादपसन्ततिर्दिवसन्ततिर्बाहुल्यया चाभूत् । यस्य चाद्भुतकरश्रियं सदाशयो बहु तेने श्रवांसि श्रुतयो गायन्ति चेतोवृत्ति सुमनस्ततयोभिनन्दन्ति ।

यस्य चामीकरोज्ज्वला[१] गजा भूपाश्च । चापापकारिणी भ्रूलता मनोवृत्तिश्च । चामरश्रीविराजिता कीर्तिः प्रजा च । चातुर्यान्विताः द्विजाः शत्रवश्च । चमत्कृतिज्ञा मन्त्रिणः कवयश्च । चारुतोल्लसिता स्वस्त्रीक्रीडाः परस्त्रीक्रीडाश्च । चतुरङ्गलीलान्विताः क्वचित्कालक्षेपा रथाश्च । चराधिकोल्लसितं वार्तावेदनं चेतश्च । चाराधिकोल्लासितं मण्डलेश्वरकदम्बं चक्रं च । चापक्रीडा युधि यमुनायां च । चरणोत्पन्ना गङ्गा कीर्तिश्च । चपलालसमाना स्त्रीकटाक्षततिः शत्रुश्रेणी च । चेलाकर्षणतत्पराः स्त्रीणां कामिनः वर्षासु कर्षकाश्च । चकोरकानन्ददायी मुखचन्द्रः कुचश्च वनितानाम् । चपेटिका शत्रुमुखे चर्या च गुणानाम् । चेतःप्रसादरम्यः सर्वोऽपि जनः कटाक्षश्च ।

यस्य स्मरविद्वेषी[२] सुन्दरभावः प्रतापश्च । स्मरणश्लाघ्या द्विजा

---

१ चामीकरोज्ज्वला सुवर्णोज्ज्वला । अर्भा यशोज्ज्वला इति छेदश्च । इत्यप्रकारेण श्लेषोऽपि ज्ञेयः । २ स्मरविद्वेषी स्मरविद्वेषीति समश्लेषो ज्ञेयः ।

वीराश्च । स्मरतिमनोज्ञा वनिता जनतावियोगे भर्तारं सौन्दर्येण च। स्मरोचिताकाराः पुरुषाः स्त्रियश्च । स्मार्ता आचाराः शत्रवश्च। किं च स्मरचितव्यथो वियुक्तस्त्रीजनो न मित्रजनः स्मयशोभाधरो भटवर्गः न शत्रुवर्गः ।

यस्य च राष्ट्रे हरणोद्योगभ्रष्टाश्चोरा रिपुवर्गाश्च । हारागद्या चन्दनालिप्तकुचयुगी अधरपुटी च स्त्रीणां । हारावकुण्ठितकण्ठाः सुहृदः शत्रवश्च । हेलासक्ताः कामिनः कर्षकाश्च ।

यस्य तुरङ्गस्थाने अश्वा नटाश्च नटन्ति स्वरान्वितं अश्वचक्रं चक्रं च। त्वचारुचितशोभं मृगकदम्बं शत्रुवृन्दं च। त्वङ्गदभङ्गशोभान्वितो मित्रपुञ्जः शत्रुपुञ्जश्च ।

यस्य रविहितशोभमप्यरविहितशोभं चक्रं चक्रं च। किंच गानन्तानि सदोवितानि मण्डलान्यवितानि। हारि विहारि अविहारि च स्तनमण्डलं स्त्रीणाम् ।

यस्मिञ्छासति वसुमतीं गिरिविभ्रमा गजा इव द्विजाः समदा द्विजा इव गजाश्च । सुमतीकस्पृहणीयाः करिण्य इव तरुण्यः सार्वभौमयोग्यास्तरुण्य इव करिण्यश्च। कलमहिता वाणीव केदारश्रेणी बहुधान्यदा केदारश्रेणीव वाणी ।

अधिकामितमङ्गाः स्त्रियः पुरुषाश्च। अधिकधनाश्रितरम्यमदाः शुकाश्च। अधिकपतिताः शत्रवः स्त्रीकटाक्षाश्च । अधिकपरहिता रणे भटाः सभासु वाचः। किंतु सिन्धुष्विव अधिकपोतसंचाराः हर्म्याङ्गणेषु वल्मीकविटङ्केषु च। महारण्येष्विव अधिककोलागम

---

१ इतो 'ह' इत्यस्य शेषः । २ इतः 'गु' इत्यस्य शेषः । ३ इतोऽ'प्यवि' इत्यस्य शेषः ।

विलसनं कामिषु प्रमदवनेषु च। शत्रुरिव अधिकमलयशोभाधरः वसन्ते वायुर्युवसु स्त्रीकटाक्षश्च। ग्रीष्मेष्विव अधिकाकोलदर्पहृति विषवैद्येषु मृगयासु च। स्त्रीजनतेव अधिकं पाकामितश्रीः आहि-ततिः कविता च। पिका एव अधिकलालापा बालका विद्वांसश्च।

किंच अधिकपटोल्लसिताः अधिकचोरीकृतशोभाः अ-धिकोपचारविदग्धाः स्त्रियो न पुरुषाः।

अद्भुतमेतत्। यदेते राजधर्मिणः बहुलरञ्जितशोभां वहन्ति तथाहि। रक्षोपकारमन्त्रविदो लक्षोपकारमन्त्रविदश्च लक्षण-प्रकारज्ञा रक्षणप्रकारज्ञाश्च लताङ्गीकृतमणया रताङ्गीकृतमणयाश्च। किं च बहुललाभान्विता बहुलरामान्विताश्च बहुलमण्यालि-ङ्गितवक्षसो बहुरमण्यालिङ्गितवक्षसश्च बहुलराज्योपभोगक्षमा बहु-राज्योपभोगक्षमाश्च। बहुलचितशुभाधारा बहुरचितशुभाधाराश्च। बहुलसाहसोचिता बहुरसाहसोचिताश्च।

किं च समदः सकुमोद्रेक एव पुण्यजनद्वेषिणी कौमोद-क्येव। नाभिजातः स तदेव। अममर्दः सनत्कुमार एव। उग्रमिषा प-वनएव। विषमदृष्टिः पशुपतिरेव।

अपि च मधुस्थितिः सरसिजेषु। मागधोद्भवः स्तुतिपाठसमये। रसभङ्गयुक्तत्वं तरङ्गिणीषु। कुभीतिर्महावराहस्य। कुमारिकाख्या कन्यानां। कुमुदाकरत्वं सरसां। विषमहितता सर्पाणां। दुष्कीर्तिः

---

१ अधि इत्यस्य श्लेषः। २ लताभा अश्वाः। ३ कृपणः। ४ पवित्रजना राक्षसाश्च। ५ न-अभिजातः। नाभि-जातः ब्रह्मदेवः। ६ प्रमदो हर्षः प्रमदा स्त्री च। ७ उग्रः चतुरः मत्तश्च। ८ मधु मद्यं मकरन्दश्च।

कुल्यासु । दुर्बीजदर्शनं मन्त्रशास्त्रे । कुशासनग्राहित्वं तापसानां। सवितृद्वेषः सैंहिकेयस्य । मातृविरोधः शुम्भस्य।

कुवेण्याख्या मत्स्योधान्याः न वनितानां । विकचासंगी ग्रहाणां न यूनां । पराभवः संवत्सरेषु न सैन्यस्य ।

विनायकत्वं गरुडेभवक्त्रतथागतेष्वेव मुहुर्ल्लास ।

सभासु सेनासु नितम्बिनीषु माणिक्यमालासु नैव बभूव ॥

अपि च सुमनःसु पतितद्विजः पूषा । उग्रकराभियोगभाक् कमलवर्गश्च । सचक्रशब्दवाच्येषु अरसगतशोभमायुधं सूर्ययोगद-ष्टं कोकचक्रमाहुः । कैलोल्लासितेषु कलङ्की चन्द्रः पक्षपाती पिकश्च ।

श्रीमत्सरास्थितिः क्रीडोद्यानेषु कण्ठेषु न लोकेषु । अल-ङ्कारोचितत्वं सीतायाः पद्मानां च न जनानाम् । सततमेही-शामदः जलदकालः सर्पराजे न राजसु ।

किं च अपदेशानि शत्रुवृन्दानि पद्यकदम्बं च। सत्पद्यानि

कविनिकुरम्बाणि शत्रुजालं च। अनुगतमृदङ्गानि योगचक्राणि स्त्रीजातं च। पवित्राणि द्विजकुलानि शस्त्रं च। नागानि नागवृन्दानि गजयूथं च। भानि नक्षत्राणि नरकदम्बं च।

सत्सङ्गरहितभावं विषमहितत्वं च पल्लवरागित्वं च सैन्ये सरसि रमण्यो जानन्त्याम्रकुञ्जालेषु।

किं बहुना।

विधुः सम्पदि चापेसौ सोमस्तारापतिर्गिरिः।
तस्मादस्मिन् महीपाले राजत्वं राजते सदा॥

किं च।

धनुर्विद्यावतां श्रेयान् ज्योतिषां योंशुमानिव।
यशसा यस्य भाति स्म द्वितारानाथवज्जगत्॥
यस्य प्रकृतयो वश्या इन्द्रियाणीव चेतसः।
नयेन तस्य विद्येव शुशुभे तेन मेदिनी॥
पुरी यस्य जनैः पूर्णा जना गुणगणैरिव।
हया यस्य जवैर्युक्ताः सपक्षा इव मारुताः॥
भूमेरुत्कृष्टपद्मत्वाद्द्विषां निःशेषितत्वतः।
यस्मिन् राजनि जानीमो ज्याकृष्टिर्नैव विद्यते॥
प्रजाभूत्यर्थमेवास्य धृतिश्चापकलत्रयोः।
संस्योल्लसन्तो जानन्ति तद्विग्रहस्सुलक्षणम्॥
वेणीस्रोतो निशारात्री रतिः कामिनितम्बिनि।
रोहितं यद्रिपुस्त्रीणामृजुशक्रशरासनम्॥

किं च यत्र सतिलकतया चित्रकामितसौन्दर्यः सद्वृक्ष-

---

१ मृदङ्गं मदार्दवः मृदनी चन्द्रिका च। २ चन्द्रः विष्णुश्च।

भूषिततया विपुलकटकांचितपुन्नागशोभान्वितः गौराम्बरतया शुभ्रानन्तश्रीविराजितः ।

किञ्च माधवतया वैशाखेडितः आम्बिकानन्दनतया विचित्रवीर्यः निर्जरतया वैमानिकामितरूपः सन्मालालंकृततया वैजयन्त्युद्‌द्युतिरुचिरः सुमुखोपि वैमुख्यस्थितियुक् सर्वसुहृदपि वैरोचितः मैत्र्याधिकासक्तोपि वैराधिकासक्तः वैकुण्ठोपि अकुण्ठसम्पदायत्तः ।

अपि च यस्य च पुरी अयोध्येव द्वारका यत्र हि रामानुरक्ताः उद्धवप्रणयिनः अक्रूरकर्मानुकूलाः सुमन्त्रोल्लासिताः सुयज्ञाभिरामाः लसद्दशरथाः सुमित्रोपेताः निवासिजनाः

यत्र च स्तनरुचिरो मेघ एव न स्त्रीजनः। मदनरुचिरः वासुदेव एव न जनसंघः।कदनमञ्जुर्भटवर्ग एव न कुन्तलकलापः। किंच भवनभूषणानि केतकदलानीव कलत्राणि । अपि च क्वणनमञ्जुलापि नक्वणनमञ्जुला वीणा ।

कथं न सा स्वर्गादतिरिच्यते। यतः यत्र स्वर्गे सदाऽऽपविघटित्वम्। महाकुलगिरिपक्षच्छेदके प्रभुता। कुमुदाहितकारिण्याः करिण्या अनुपमाभिधानरमणीयता। वसन्तं माधवमसुमनसं प्राहुः सदामलकविरपष्टस्पर्द्धिनं गुरुमाहुः । सदाशक्रयशोभां वहति

१ उद्धवः आनन्दः कृष्णसखा च। २ अक्रूरः शान्तः कृष्णशिष्यश्च । ३ लसन्: शब्दः कुशश्च । ४ कदनं हननं मर्दनं च । ५ भवनस्य शङ्करस्य न भूषणानि उक्तं च "वर्जोच्चित्रे केतकं शंकरारिः" । भवनं गृहं च । ६ न क्वणेन न मञ्जुला । ७ असुमनसम् अपुष्पम् । असुः एव मनः यस्य तम् । ८ अम्मल-कवि-स्पष्ट-स्पर्धिनम् । -आमलक-विरपष्ट-स्पर्धिनम् । ९ शक्र-दाय-श्रय शोभाम् । सदा-नक्षत्र-शोभाम् । दारांधीवरः । पत्याने अक्षारोच्चारणं यजुर्वेदीसा उत्तादेशतया कुर्वन्ति ।

देवगणः । कृशानुभावमङ्गीचकाराग्निः । वैवस्वतं यमदेवमाहुः वरुणस्तु न विप्रचेताः। अलीकदृष्टिः शिवः । कुबेरस्तु गुह्यकाभितप्रणयः । किं बहुना स्वःपुरंदरं वहतीति लोकापवादः । अलमितिविस्तरेण यथ ।

सुरवरदः सुरवरदः सकलः सकलो बली बली सततम् ।
ललितप्रमदो ललितप्रमदः सरसश्च सरसश्च ॥ १ ॥

पादे यस्य हि मालती कुवलयं यस्योदरे राजते ।
वक्षोलंकरणं तनोति कमला धासेऽपि कोशालये ॥
कुन्दश्रीः कुमुदोल्लसच्च भवनद्वारोपशल्ये सदा ।
जीयात् सत्सु मनोभिरामचरितः श्रीकृष्णकल्पद्रुमः॥ २ ॥

यस्य च पक्षधारातिभयंकरमपि सहस्रधारातिभयंकरमश्ववृन्दं न । अस्त्वेतत् । स हि कदाचित् निरन्तमुखानुभवकुण्ठेतरमहिम्नि वैकुण्ठे वनितासु च चरमया रमया रममाणः धरणितलशोभादिदृक्षया तत्रतत्र पर्यटन्नेकाकी कस्मिंश्चित् प्रदेशे खड्गचक्रशरासनशिलीमुखोद्भासितं मत्तसारङ्गहरिचक्रिशोभितं अनेकभूदारकुलसेव्यमानपदं महाराजमिव अशेषभूभृदुत्तंसं कंचन पर्वतं ददर्श ।

---

१ कृश-अनुभावम् कृशः सूक्ष्मः । कृशानुभावम् अग्नित्वम् । २ यम्-अदेवम् । यमदेवम् । ३ विप्रचेता विगतं प्रकर्षेण चेतो यस्मात् । उन्मत्त इत्यर्थः विप्र-चेता विप्रेषु चेतः मनो यस्यैतादृशश्च । ४ अलीकः भालप्रान्तः । अलीकम् असत्यम् । ५ गुह्यकं भूमिस्थापितं द्रव्यम् । गुह्यका यक्षाश्च । ६ स्वः पुरंदरम् इति पदच्छेदौ । ■ सुरान्वरं ददाति इति वा इत्यादि? । ८ पक्षधारा अश्वस्य पक्षगतयः । "आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्" इति ।

स एव हि वरचक्षुःश्रवणनिर्जरकन्यकाविहरणभूमिः विश्वाधिकं काञ्चन श्रियं वहतः धराधरख्यातिं गतस्य गौरद्युतेः अगराजस्यापत्यं नागराजस्यांशावतारः शेषाचलो नाम । यश्च गिरीशोपि चन्द्रस्वरूपः तुङ्गभद्राकृतिरपि शतद्रुशोभितः ।

अथ चैनमालोकयतस्तस्य चेतसि चिन्ता समजनि । किमयं विन्ध्यो भवेत् नहि नहि स हि करीरजाततिरस्कृतमहिमा अयं पुनः स्वपादैकदेशाश्रयवर्धितकरीरजातः । नापि मेरुः स च सुराक्रीडम् । नापि महेन्द्राद्रिः सह्येकरामाश्रयः । अथ वा सोयमेव भवेत् । शेषमारुतविवादेन भूतलं प्राप्तः दिव्यभोगिकुलप्रणयिनः कलधौतरूपस्य रत्नसानोरपत्यं सर्पराजस्यांशावतारो भगवान् भुजङ्गाद्रिर्भवतु यो वा को वावगाह्य तावत् पश्यामीति ।

ततश्च सानुगोप्येकाकी सुपादोरुनितम्बमध्यदेशोल्लसन्नाभिशोभां सुललितकर्णनेत्रां शिखरमनोज्ञदन्तावलिविराजितां कुन्तलसत्केतकसुमां पुन्नागस्पृहणीयां पर्वतैकदेशस्थलीं तत्र कांचन वनदेवतां चापश्यत् ।

अथ तया वनदेवतया देवायमद्भुतनिदानं पर्वतेन्द्रः यतोस्य मनोजवसत्त्वम् । तथाहि । अत्रेदं नन्दनवनं यत्र समन्दारानन्दमनुभवितं जनः । प्राप्नोति च सन्तानसुखं महाकल्पलताङ्गीकरणबद्धस्पृहश्च लसद्धिपारिजातं हरिनन्दनं च पश्य । किं च सदाख-

---

१ शेषस्य । २ अनंतजलशोभित इत्यर्थः । ३ हस्ती वृक्षविशेषश्च करीरः । ४ मन्दारमानन्दम् । समन्दारानन्दम् । ५ सन्तानः कल्पवृक्षः पुत्राश्च । ६ महा-अक्षयद-मह्-विचारः । महा-अलगद-लसत्-विचारः ।

ण्डलसद्विचारश्च लसति सदामेरालीसञ्चारश्च राजते । ललितास्परसां गणश्च शोभते।

अपि चायं क्वचिद्धातुरागराञ्जिताम्बरो मस्करीदर्भासनभूषितः परिगतमुनिगणो निकटशोभमानकरीरो निरुद्धाशावकाशोऽनुकरोति संन्यासिनः। क्वचित्सनारदः पर्वतत्वं सफलयति क्वचित् कौशिकमदनार्कसोमशिखिवरुणावासतया स्वर्ग इवोपलक्ष्यते। किञ्चिद्विहस्य देवेतः पश्य। अत्र हरिपतिर्गजं विदारयति। शरभः केसरिणं बाधते ऋक्षस्त्रासितलक्ष्मणः रामोऽनलं भक्षयति नीलो गवयश्चोन्मूलितरम्भः पनसमपि भङ्क्तुमिच्छति।

अनन्तशाखोल्लसितागमश्रीर्न्यङ्कुव्रजाराधितपाददेशः।
नानाद्विजालापमनोहरोऽयमाचार्यलीलां विवृणोति शैलः॥

इन्द्राणीरुचिरतराप्सरोभिरामो ज्ञातैरावतवरकुम्भरम्यलक्ष्मीः।
सोऽयं निर्जरवनिताविहारभूमिः शैलेशः प्रथयति पाकशासनत्वम्॥

सुहितमिलिन्दा बहुतमरन्दा परिमलपुञ्जा कलितकरञ्जा।
इह नृपवल्लीव्रततिमतल्लीर्निबिडितपत्रा कुसुमविचित्रा॥

---

१ सदा-अमर-आलि-संचारः। सदा-मराली संचारः। ललिता-अप्सरसां। ललित-अप्-सरसाम्। ३ आकाशं वक्षं च। ४ वेणुयुक्तः परिव्राजकश्च। ५ देव विशेषत्वम्। ६ कौशिकः इन्द्रः पक्षिविशेषः गुग्गुलुवृक्षो वा। मदनः कामः काञ्चनवृक्षश्च। अर्कः सूर्यः वृक्षविशेषश्च। सोमः चन्द्रः सोमवल्ली च। शिखिर्मयूरः अग्निश्च। वरुणः देवता वृक्षविशेषश्च। ७ हरिपतिः हनूमान् सिंहश्च गजस्तन्नामा वानरः हस्ती च। ८ एतन्नामा वानरः सिंहारिश्च। इत्यादि वानर नामादिभिः विरोधः यथार्थेन परिहारो ज्ञेयः। ९ शाखा वेदशाखाः वृक्षशाखाश्च। १० न्यङ्कवो मृगा कण्वश्च। ११ द्विजाः पक्षिणः ब्राह्मणश्च।

साश्चर्यम्। इत उत्तरतो हि दृष्टिं मथुरावन्यां कृष्णेनेववन्यां कृष्णवर्त्मना क्रीडितं भवेत् । यतोयं पर्वतैकदेशो हीनबको नष्टहंसो मृदितगृगाल उत्सन्नबाणो दग्धभूमिजस्त्रासितगजमङः।
दलल्लिकाजालनिर्यत्ननिर्यन्मरन्दद्रवासारमत्तालिगीतम् ।
समाकर्णयाद्रिः कुरङ्गैर्द्विपारिं विलोक्यापि नो भूभुजङ्गत्रयातम्॥५॥

इतः पुरस्ताद्भारतसमर इव धनञ्जयोल्लासो दृश्यते । तथाहि। विपक्षीभूय शकुनिर्नश्यति द्रोणोपि, मृदितपक्ष भीष्मोयमुलूकोपि ग्रस्तः । अत्राप्य पलायितं शैल्येन । कर्णोपि दग्धः । एकाकिना धार्तराष्ट्रेण उत्पतितम् । अत्रात्र शरासनभङ्गः शिलीमुखाश्च्युतलक्ष्याः सञ्चरन्ति सर्वे एते भूभृतं खेदयन्ति ।

क्रीडत्कीरां नीलतमालां वनलक्ष्मीं
शक्राश्माढ्ये सानुनि जातां गजवृन्दैः ॥
दृष्ट्वा क्रान्तां विस्तृतपक्षो घनबुद्ध्या ।
नृत्यति पक्षी मत्तमयूराभिध एषः ॥ ६ ॥

किं बहुना ।

फालैर्वत्तिलकोल्लासी रम्भोरम्यश्च रूपवत् ।
नेत्रैर्वत्कमलानन्दी कान्तानां पन्नगाचलः ॥ ७ ॥

---

१ धनंजयोऽग्निरर्जुनश्च । २ पक्षी दुर्योधनमातुलश्च । ३ काकविशेषः । द्रोणाचार्यश्च । ४ भीष्मो भयंकरः भीष्माचार्यश्च । ५ उलूकः पक्षी तन्नामा योद्धा च ।६ तरुभेदस्य विशेषः धर्ममातुलश्च । ७ धार्तराष्ट्रो हंसः दुर्योधनश्च । ८ शिली बाणः प्राणिविशेषः ।९ राजानं पर्वतं च ।१० फालवान्, फालोमहादेव, भालपुरुषश्च धामो तिलकाख्यामो तिलकः कुङ्कुमस्य तन्नामा वृक्षश्च तद्वान्। ११ रम्भा कदली रम्भोरुना च । १२ नेत्रं वृक्षजटा नयनं च ।

क्वचिच्च तालाधिकसुन्दरश्रीः क्वचिच्च कुम्भोन्नतचारुलक्ष्मीः ।
क्वचिच्च पीनोच्चकरीरसंपच्छोभाचलोयं कुचवन्मृगाक्ष्याः ॥ ८ ॥

इति सादरमुद्दिश्यमानानि वस्तून्यवेक्षमाणः क्वचित्प्रदेशे अगस्त्यभयाद्विलीनमिव सागरं सिन्धुनिर्माणमभ्यस्यतो विश्वस्रष्टुरक्षावलीव हरिणा कल्पितम् अभिनवसमुद्रनिर्माणसमय इव विधेः पुराणनिकृपारावारमक्षेपस्थानं विश्वकर्मविनिर्मितपुनरुद्यनिर्मलानेकस्फटिकसोपानावलीप्रतिबिम्बितसुरापिलमरन्दधाराकलितललितबिसकुसुमसौरभ्यलुभ्यन्मधुरमधुकरनिकरमगुञ्जित–समाकर्णनविश्रान्तरङ्कुरङ्कुशावकमारणेच्छानिपतद्विफलीभवदुड्डीनसहस्रमन्दाक्षमुद्रितमत्तशार्दूलं जलार्द्रविशदवसनान्तरितप्रस्फुटोपलक्ष्यमाणपीनोच्चकुचकलशसञ्जातमत्तमातङ्गकुम्भयुगलभ्रमजनितविदारणस्पृहागतकण्ठीरवकिशोरकभयार्द्रमज्जनदेवता–निकरं देवार्चनकुसुमापचयासक्तबाल्यावधिबद्धब्रह्मचर्यव्रतदूरीकृतमदनतन्त्राभ्यासमुनिकुमारकनखाङ्कुरक्षतजनितसीत्कारानुमी–यमानजलविहारपरवशजलमानुषीजनवदनपद्मभेदं तदनिकटा–वटस्थलीनिलीनजृम्भमाणयुग्मावलीलाविवशविद्याधररमणीमणी–मसृणभणितश्रवणजनितकपोतपोतकण्ठारावभ्रमभ्राम्यच्छौङ्क्यशा–तसकुलं वराहवनितादत्तगाढाङ्कपालीदोहदप्रफुल्लबालकुरवकव–नीपरिगततटैकदेशम् । कामिनमिवोत्कलिकासहस्रम् अर्जुनमिव सिन्धुराजपरिपन्थिनं ललनाहस्तामिव विलसदूर्मिकाचक्रम् उच्चैःश्रवसमिव शुभावर्तहृद्यं साकेतदेशमिवोर्मिलास्यदर्शनमुदितलक्ष्मणं

---

१ वरीरः वृक्षविशेषः वटवृक्ष । २ मकः । ३ अङ्गुलीभूषणम् लहरी च ।
४ ऊर्मि–लास्य (नर्तन)–दर्शन– । ऊर्मिला–आस्य–दर्शन–।

राज्याभिषेककालमिव पुण्डरीकच्छायानिषण्णकलहंसं कालीयनागमिव कृष्णवेणीसमं कलशपारावारमिव जलैकदेशमुक्तचक्रिणं जनितपद्मं च दृष्टमातङ्गकुलविहारमपि शुद्धं सपङ्कजातमपि निष्पङ्कजातं जडाशयमपि नवरसोल्लसितं स्वामिपुष्करिणीतिविश्वविख्यातं कमपि कासारमपश्यत् ।

अथ तदवलोकनाद्विगतपरिभ्रमणायासः क्षणं विश्रम्य हंसमिव केवलं क्षीरमयमाहारमुपकल्प्य माध्व इव सद्वार्तागममभिनन्दंस्तत्तीर एव नक्षत्रगणस्येव संबद्धमूलस्य शिवचन्द्रस्येव सदाबालस्य भागवतस्येव विलसदनेकस्कन्धस्य सुजनस्येव सफलजन्मनः गरुडस्येव सुवर्णस्य चिञ्चातरोरधःप्रदेशे पातालगतागतमार्गमिव वसुवरानाभिमिव किमपि वल्मीकमलोकयदचिन्तयच्च।

इदमस्माकमावासस्थली भवेत् । यतो निकट एवेयं पुष्करिणी घनरसमयी वनितेव सुखयति सकलितस्तोपा च । अयं वृक्षोऽपि कुटुम्बीव मार्थकितमुत्तरूतस्तोपयाति द्विजाश्रयश्च। इयं कल्याणी गगनगङ्गा निवसत्यविदूरे स्वरतिरिवानुकूलितकमला धराभियोगदद्या च। एते पक्षिणोऽपि ऋषिगणा इव पुराणागममणयिनः वेदमपनयन्ति सकलकल्याश्च। एष भगवान् क्रोडरूपी हरिरत्रैव निवसति। नूनमयं कल्पितपराधरम्यचिरेना मही क्षणमपि न मुञ्च

नि । इत्येवमालोच्य वासमकरोत् । ततो गतेषु केषुचिद्दिवसेषु कदाचिद्ग्रामलूरविवरान्निर्गत्य क्वचिद्वनोद्देशे यास्यन् क्रोडनातितया नारायणावतारतया च भूदारं जङ्गमामिव रजताद्रिमूर्तिमन्तामिव रौद्ररसं जनकामिव शेषाचलस्य घोरघुष्यद्घरट्टकसपत्नेन कण्ठारवेण हसन्तामिव पुष्करावर्तं स्मरन्तामिवाद्यापि हिरण्याक्षयुद्धसंरम्भस्य भगवन्तं कुहनावराहमद्राक्षीत् ।

तदनु निमिषलोचनलोभनीयश्रीलसत्क्रोडाकृतिः-गौरपयोधरराजमानदिव्यकान्तिः अचलानन्दहेतुः अयं जगत्स्रष्टुर्नासाविवराल्लब्धजन्मा स्तब्धरोमा इयं देवी धरा च । भवतु दिष्ट्या दृष्टिमार्गमगमदेतन्मिथुनं तदेतत्प्रणामविषयी-करोमि ।

इयं सरलता मद्गुणानां सेयमम्लानता पुष्पाणाम् अविकृतिः क्षीरस्य मणेरकाठिन्यं निर्भुवनस्यावसानं लक्ष्म्या अचाञ्चल्यं विदुषाममात्सर्यं तपसो निष्कामता मैत्र्या निर्व्याजता स्त्रीणां योग्यसमागमः सुकवेः श्लेषकात्मरचनावैदग्ध्यं सकलजनश्लाघनीया भवन्तीति निश्चित्य यावत्तथाकर्तुमिच्छति तावद्वराहदेवोऽपि दूरान्निरीक्ष्य हंहो पुरत एव श्रीनिवास इव लक्ष्यते अयेऽधररसविनिर्जितनवमधुषे वसुधे त्वमपि विचारय तव कुचाभोगेनेव चक्रहृद्येन करेण चन्द्राचलसौन्दर्यहरेण मुखेन सरलतामनोज्ञेन च चरितेन भद्राश्लिष्टेन लोचनयुगुलेन सर्वभूभृद्दर्पदारकेण प्रतापेन राजभानो राजभानहारिवदने वद नेता तवायं श्रियो न वेति सभुजाचालनं कुचाधिकृतगोत्रया गोत्रया

१ वल्मीकम् । २ वराहशरीरिणम् । ३ सूकरः । ४ मैथुनस्य ।

सह संलपन् फुल्लपङ्कजनयनो द्रुतमागत्य पादयोर्नमन्तं वत्स किमेतत् क्व भगवान् क्वायं पन्नगाद्रिः क्व गमनक्रमः क्व तव दर्शनं अयं परीपाकः प्राचीनपुण्यस्य इदं फलं तपस्तरोः इयं सूचना भाविकल्याणप्राप्तेः सर्वथा नमोस्तु भगवते अतर्कितघटनापटवे भागधेयायेति व्याहरन्निव मानसं ध्यानसङ्गत इव किंचित् स्थित्वा वीरलक्ष्मीनखक्षतायितहिरण्याक्षगदाघातकिणाङ्के वसुमतीकठिनतरकुचयुगलसंघर्षमसृणिते भुजान्तरे क्षणं कृत्वा वत्स दिष्टया तादृशमहावीरकदम्बकालरात्रिकल्पाद्भारतसमराद्वत्सायाः इन्दिरादेव्याः सौभाग्यादेवोर्वरितं जानामि ।

भवतु तावत् कथयैतत् ।

कच्चित् कुशली यादवेषु कौरवेषु च सुराजन्यमार्गमद्दवेषु अन्यकैकुलशिखामणिरुग्रसेनो धृतराष्ट्रश्च । देवकीनाशस्यहास्थानं कंसो युधिष्ठिरश्च । सुबलाङ्गप्रणयी अनिरुद्धः कर्णश्च । तोषितसाम्बः प्रद्युम्नो गाण्डीवधन्वा च । उल्लसदनिरुद्धकामः बलभद्रो दुर्योधनश्च । स्वगुणश्रवणतोषितकर्णः उद्धवः शकुनिश्च । सदानपगतसाम्प्रीतिः कृतवर्मा भीमसेनश्च ।

अत्र मेमुद्राहश्रीः श्रीनिवास त्वदीक्षणात् ।
यातना किं मदाश्लेषैर्धन्या क्रोडीस्यतिश्च मे ॥

---

१ अन्धको वंशः अन्धककुलं अन्धकसमुदायः । २ देवे-कीनाश-पट्टहास्थानं देवकी-नाश-पट्टहास्थानम् । ३ सुबलाङ्गेषु यौद्धृषु प्रणयी प्रीतिमतां । सुबलात्मजः शकुनिः । ४ साम्बो जाम्बवतीसुतः शान्तश्च । ५ अनिरुद्धः कृष्णपुत्रः अनिरुद्धः । ६ कर्णः प्रसिद्धोऽर्जुनादिः कर्णो धर्मः । ७ बाहुबल्यन् गदाइत्यादान्त्व च ।

इति वद्धालापः क भवानित्यादिपूर्वोक्तमेव स्तब्धतारं चलितमौलिना साग्रस्थापिताङ्गुलिकं आम्रेडयन् तेनापि कचिन्मौनमुद्रया कचिदन्तर्व्यथापिशुनशुष्कहासेन कचित्कण्ठारावेणापि नरकवधवर्ज्यं स्ववृत्तस्य स्थापयित्रा लक्ष्मीनेत्रा सह कांस्मिाश्चित्प्रदेशे क्षणमासाञ्चक्रे। अथ श्रीनिवासोपि प्रेमार्द्रया विनयबहुलया तद्वाचा अभिनन्दितः भगवन् मायादंष्ट्रिन्

सरसा विशदा क्रोडीकृतसारगुणा तनुश्च वाणी च ।
नानार्थाय प्रभवति कस्य न दृष्टा श्रुता वा ते ॥

किंच देवात्र कञ्चित्कालं वस्तुमिच्छामि तद्भवतो भूमिं कामये इत्यकथयत् ।

तच्छ्रुत्वा किमयं प्रभोर्वराहदेवस्य महिषीं विश्वम्भरादेवीं स्वीकर्तुमिच्छतीति किञ्चित्कोपशोणितेक्षणे पोत्रिकदम्बे विलज्जमानायां वरादेव्यां वराहदेवोपि दर्शंदर्शं देवीवदनं दरदर्शितमन्दहासः श्रीनिवास मन्मनीपितमप्येतत् न केवलमेकामेव धात्रीं किन्त्विमां बकुलमालाभिधानां धात्रीं च स्वीकुरु कुरुकुलमणयिन् । आदौ भक्तिमदर्शनादिमानः कार्यः वत्सैतदपि जानामि नावयोरन्तरमिति तथापि कालः कलिरागतः त्वमपि स्तोके जले निमज्जसि तदपि ज्ञातपूर्वमेव यन्मात्स्ये वामने चाप्यवतारे स्वल्पं स्थानं प्राप्याक्रान्तवानसि सकलमपि भुवनतलं नोद्धार्यं मर्म परेषां। अथवा किं नः कार्यं नरठानां तथापि मर्या-

---

१ क्रोडीरताः हृदयपक्षताः । २ विशेषीकृताश्च । ३ भूमिम् । ४ आमलकीम् ।

दा कापि वरमिति वदति। यदाज्ञापयन्त्यार्यचरणा इति दर्शितविनये वासुदेवे अतिक्रामति घटिकाद्वये वियन्मध्यारूढे तमःकलगचिन्नभानौ चित्रभानौ

जाताकास्मिकमेघरावमतिभिः सम्भावितः केकिभि-
र्निर्यातभ्रमगाढलग्नवनितैराबन्दितः किन्नरैः ॥
श्रीमत्पन्नगशैलराजवसतेः क्रोडस्य लक्ष्मीपते-
र्नादब्रह्ममयो ललास नितरां मध्याह्नभेरीरवः ॥ १२ ॥

ततश्च यथास्थानं सबकुलमालां धरां स्वीकृत्य प्रापतुः ।

अथ विश्वंभरया पृष्टतद्वृत्तान्तः वराहः कथयामास। शृणु देवि सरसेरसे सावधानं स्पर्शनानन्दभाक् अचलराजसम्पद्धरः भूभृत्करमसारमहितः अखण्डचक्रश्रियं दधानः तव कुचाभोग इव न्यस्तचोलमण्डलं चोलनामा महीपतिः ।

यस्मिन् विलसति लोचनलोभनीयरम्याकृतौ सन्मालापरिगते सुवृत्ते अत्युन्नतधर्मशालिनि तव कुचमण्डल इव राजनि अहमिव अनिमिषश्रियं दधानः सात्त्विकभावमापन्नः सकामः सकलोपि लोकः । एवं स्थिते कदाचित्कापि लसच्छृङ्गारोचिताकारा सुरभिसुमनोहारिणी गोपालबालिका स्वसमानां कामपि गामानीय विक्रीतवती। स राजा तां रोहिणीं सत्यपि महिषीवर्गे पुत्रार्थमचीक्लृपत् । सा च गौश्चिरन्तनेन गोपेन पाल्यमानापि अत्युन्नतं भूभृच्चक्रवर्तिकुमारं दोषापत्यमाश्रित्य पांसुलेवाक्षीरा वनमायाति स्म। अन्यदा तु राजदण्डभीत्या वल्मीके क्षरत्क्षीरामारादालोक्य तां धेनुं पर-

१ मेघरवदबुद्धिभिः । २ क्षाम् ।

शुना जामदग्न्य इव क्षत्रियततिमखण्डयत् स गोपालः। सापि कुहनाधेनुर्योगिराज इव कालजवं तं कुठारप्रहारं यावद्विफलयति तावदेव कल्याणि किं कथयामि वत्स वासुदेवस्यौदुम्बरक्षीरार्ककार्पासगवेषणदशा संवृत्ता तदप्याकर्णय यत्परस्ताद्वृत्तमिति।

ततश्च तव गेयमिव ताळप्रमाणोज्ज्वलं रक्तं पश्यतो गोपस्य सावस्था जाता। या मुचुकुन्दस्य स्वापभङ्गकारिणो यवनस्य अथ वा सरससाहित्यानिन्दकस्य दुष्कवेः। अथ ज्ञातवृत्तान्तश्चोल आगत्यालोचयामास।

अहो कोयमद्भुतदर्शनः सुमतोकोपि सार्वभौम इव दृश्यते। कल्पोपि पुन्नाग इव राजते। सुग्रीवोपि बलाहकस्यानुकरोति। नीलोपि नलसुन्दरः। तिष्ठत्वेतत् कोयमिति। जानामि किमयं प्रतापनिधिः सप्तार्चिर्नेत्रयमकृशानुभावं धत्ते स्निग्धच्छायः सप्ताश्वो भवेत् अहह निशोल्लसदम्बरपरिष्कृतोयं भवतु यो वा को वा कथमीदृश्यस्यैतादृशी अवस्था किमिति सम्भाषयामि यदि तमेव पृच्छामि नाय प्रज्ञावतां पन्थाः अथ वा ऽनालोकितेन यथागतं गच्छामि तदितरा का निस्त्रिंशता अथ वा मदीयगोक्षीरमन्यायेन पिबतस्तवोचितमेव जातमिति भणा-

१ औपम्यार्थम्। २. तालो मानकालमानं वृक्षश्च। ३ सुन्दराक्षः दिग्गज नाम च। ४ वृक्षः रोगरहितश्च। ५ पुन्नागः वृक्षः पुरुषश्रेष्ठश्च। ६ सुग्रीवो वानरः सुष्ठु-ग्रीवा-यस्य इति च। ७ बलाहकः पक्षी मेघश्च। ८ वानरः नीलवर्णश्च। ९ नलः वानरः नलोराजा। १० कठोरता।

र्मि । तद्वीथीपिशाचस्य गृहनयनप्रकारः । इत्येवंविधप्रकारमालोच्य कथंकथमपि मधुराधिपोऽयमिति ज्ञात्वा प्राप्तकालप्रतिक्रियेयमिति निश्चित्य यावद्दण्डवत्प्रणन्तुमिच्छति तावदेव तं दृष्ट्वा देवोपि प्रकोपस्फुरदधरान्निर्गच्छद्रूक्षाक्षराणि श्रावयाञ्चकार । रे रे चोलेन्द्र साधु रे साध्वनुष्ठितं भवता नायं तवापराधः पापीयान् श्रीमदस्त्वामुत्तरलयति प्रायस्त्वद्विधा बहवो महदवज्ञानात् स्वानुरूपं फलं प्रापुः। तथाहि । निमिमदनयोर्विदेहभावः । चित्रकेतोर्नहुषस्य चाहित्वम्। जयविजयनलकूबरादेः पलाशित्वम्। त्रिशङ्कोरिन्द्रद्युम्नस्य च मातङ्गता । अतस्त्वमप्येवं भवेति । तच्छ्रुत्वा स भूभृद्वाग्वज्रेण ताडितो निःसंज्ञो निपपात । देवि वल्लभतुच्छीकृतानन्तेऽनन्ते चित्रमेतत् ।

कुठाराहतिरेकस्य गोपस्यान्यस्य पञ्चता ।
पश्य पश्य वरारोहे तदन्यस्य पिशाचता ॥
चक्रिणा श्रीधरेणायं वल्मीकस्थानवासिना ।
तेन चोलनरेन्द्रोपि क्षणादुद्विजितः प्रिये ॥

अथ तस्मिन् मोहमापन्ने भर्ता जीवनदानेनापि सत्कार्य इति अप्सेकादिना कृततत्प्रबोधप्रयत्ने कस्मिंश्चिन्मन्त्रिणि देवप्रस्त्या कृपागुणनयोर्यं नृसिंहेन त्वया दण्ड्य इति चित्रसमुद्रोदरमग्नं मे चेतसः दाहदाक्षिण्याद्विकायामपि दृष्ट्वा भवत् कठिनमपि हैयङ्गवीनमिति सचेलाश्रयमपारं प्रणमति श्रीनिवासेपि किञ्चिन्मन्दीभवत्कोपावेशे सरसाक्षरालं नृत्यति गगनतलावलम्बिनि कल्पद्दर्शनानिर्विद्दे मुनीन्द्रे अयमस्याभिनवपिशाचस्य चोलदेव-

स्य वासार्थं ब्रह्म इति प्राकृस्थिताक्रन्दमुद्भूतकुटुम्बकं श्रीणिशैलमटीतरोर्निवासयति वेतालभृत्यगणे राजा चोलोपि कथमप्युद्बुद्धः साञ्जलिबन्धं वाचमुवाच ।

धर्माद्विमुखो भीष्मश्रीरजोव्यग्रमद्रकः प्रजाराहितः ।
पार्थं नासीत्किं ते करुणायाः किं तया नाहम् ॥

अथ वा किमार्थनया महतां शापेन जगत्यस्मिन् को वा नष्टः।

इन्द्रद्युम्नस्य पुन्नागत्वं । नलकुबेरस्यार्जुनत्वम् । नहुषस्य चक्रित्वम् । मामपि देवस्य शापः काममुन्नतिं नयेदिति । ततश्च श्रीनिवासोपि श्लेषकाव्यबन्ध इव क्षणं कठिनस्वभावः द्राक्षामधुरो मधुराधिपो वाचमुच्चारयाञ्चकार । भो भो महाराज चोलेन्द्र रोषाधीनचेतसा वृथा शप्तोसि धिगृधिक् क्रोधाधीनचेतसं नरम् । पश्यपश्य कश्चन क्रोधनो यः पुरस्कृतक्षय एव भवति अस्त्वेतत् किञ्चित्कालं सफलितमङ्गनो भव । अचिरादेवैतस्मान्मोक्षो मोक्षश्च ते भविष्यति। ततः परं यद्वृत्तं तद्भवति जानात्येवेत्यभिधाय स्वोचितकार्याय दत्तहस्तावलम्बोऽद्रिरिवोदतिष्ठत् ।

इति च श्रीनिवासोपि वनादागत्य सहबकुलमालया । अहो निष्कारणमैत्री निर्व्याजा प्रीतिः । लोकोत्तरं सौजन्यं निरपेक्ष उपकारकम इत्यादिवराहगताल्पपभूयिष्ठं व्याहरन्नेव ।

ललितकमलश्रोमे पर्वतेन्द्रस्य पादे
गमयति कृतसक्तिर्वत्सराणां शतानि ।

---

१ पुन्नागः दर्शा वृक्षश्च । २ अर्जुनः वृक्षः धर्मानुजश्च । ३ चक्री सर्पो विष्णुश्च । ४ मोचनं मुक्तिश्च ।

नरमृगपतिसूरेस्तादृशो वेङ्कटेशः
कविरिव विगतान्यव्यापृतिः श्रीनिवासः ॥

इति श्रीमन्निखिलभूचक्रवर्त्तिविपश्चिद्वन्द्यपादश्रीवेङ्कटाध्वरिकवेः कृतौ श्रीनिवासचम्पूकाव्ये प्रथम उच्छ्वासोऽयमत्र समापनमाप । श्रीवेङ्कटेशः प्रीतो भवतु ।

—०:०—

## ॥ द्वितीय उच्छ्वासः ॥

अथ कदाचित् क्वचित् स्रुतमालालोकनजातानन्दः । क्वचित् स्थाने लसत्पृथुलकुचतरुण्याहितदृष्टिः । क्वचित्स्थाने मातुलजातासूयः । क्वचित् स्रुतोल्लसत्प्रीतिः । क्वचित्स्थाने मानिततापससंगणः । भवन इव वनेऽपि विहरन् श्रीश्रीनिवासः कस्मिंश्चित्प्रदेशे अतिधवलशरीरकान्तिः अनिलवेगप्रकीर्णकापिशजटाकलापं । किञ्जल्कपुञ्जाक्रान्तमिव सिताम्भोजवनकान्तिसमूहं कृष्णाजिनावगुण्ठितकलेवरं प्रलम्बवधमुदितमुरान्तकालिङ्गितमिव रेवतीजानिं कृतहरिचन्दनाङ्गरागं गङ्गाजलस्नापितमिव शिवशिरःशेखरचन्द्रकिशोरं सुतारोल्लासमानया दृष्ट्या कान्त्या च महत्या वीणया तमस्यया च राजमानम् । किं च वसन्तमिव सुरभिं ग्रीष्ममिव महातपस्थितिभासुरं वर्षाधाम-

---

१ पु—तमाल—भक्तिमत्० । पुस—माला—भाल० । २ लसत्—पृथु—तरुण—तरुणि । लसत्—पृथुल—कुच—तरुणी—आहित दृष्टिः । ३ पु—माल—संप्रीतिः । ४ तापसाः पुराः कृश्यश्च । ५ महा—भासव० महा—तप० ।

रमिव नभस्यागमनं कलयन्तं शरत्समयमिवानुभूतविधुप्रसादं । हेमन्तमिव सदाहिमहितम् । शिशिरमिव पुरस्कृतमाधवम् इत्यनुभूतसर्वर्तुकालोचितचरित्रमप्यज्ञातर्तुकालोचितचरित्रं पाण्डुमप्यर्जुनमात्मभूस्पृहणीयमपि निष्कामं पर्वतयुक्तमपि अनाश्रितभूभृतं क्षमावासमप्यम्बरचरम् अपापमपि नारदाभिधानं कञ्चन तपोनिधिं नयनातिथीचकार । अचिन्तयच्च ।

न रागं मानसे धत्ते पक्षपाती च नाभवत् ।
हंसोयं कश्चिदपरो घनसाररुचिर्यतः ।

ततः किञ्चिद्विहस्य यथाविधि सम्पूज्य प्राह । स्वायंभुव कलहोत्पत्तिनाटकसूत्रधार कुतो भवान् इति । सोप्यवदत् । दक्षिणं पाणिमुन्नमय ।

सूर्यलोके निष्प्रभोयं चन्द्रार्को नन्दनन्दनः ।
चिरं कराब्जौ वहानि वह्निः केनोपमीयसे ॥

अस्त्वेतत् । भवद्दर्शनकाङ्क्षया वैकुण्ठलोकमगमम् । यत्र च शोभनमुक्तावलयः राजमानातनुभाः सरलसरसः असदृशः भूभागा वनिताननश्च । यत्र च कुमुद उत्तरद्वारपालाः सद्विपः पर्यङ्करूपः शेषः कान्तिमहापद्मो देवगणः न जनाः । गत्वा च । अहो दैवाद्योग्ययोरेव सकललोकोत्तरयोः स्पृहणीयजयविजयोः मासमानबलप्रबलयोः विदुरप्राप्ययोः वैकुण्ठाभिधानयोस्तव त्व-

---

१ नभस्यः भाद्रपदः नभस्य देवस्य । २ चन्द्रः विष्णुश्च । ३ सदा-हिम-हितम् । सदा-अहि-महितम् । ४ माधवो वैशाखः विष्णुश्च । ५ मनसि मानसे च । ६ कर्पूरकान्तिः । ७ पेटिके महापद्मं महास्थानं च । कान्तिमती भार्या च ।

छोकस्येति द्वयोः संयोगः संवृत्त इति सानन्दः तत्राशृणवं भवान् भूलोकं गतवानिति । ततश्चाहमन्विष्येतस्तत आनन्दकाननं गतोस्मि । यत्र च ।

> यद्वापापिद्धरापा सा चन्द्राभा पीनलक्षणा ।
> प्रौढाप्याख्यातमौग्ध्या सा चित्रचर्या तरङ्गिणी ॥

अपि च ।

> करेहि चक्रं कलयन् श्रियालिङ्गितकन्धरः ।
> विनायैकमियः शम्भुर्माधवश्च विराजते ॥

तत्राप्यदृष्ट्वा मिलितोभयवाहिनीभरसंमर्दनर्तनलसत्कबन्धे प्रयागे कुरुक्षेत्रे च । हरिपदाङ्कितगयाक्षेत्रे हिमवच्छिखरवरकदम्बे च विफलितप्रयासः केवलं द्विजातिसुलभां दक्षिणाशां लक्षीकृत्य प्रवरोपशोभितामपि विप्रवरोपशोभितां गोदावरीं प्राप्य । स्तुत्वा च ।

> नमामि मानदां गोदां नयनायनतां गताम् ।
> नमद्धामनताङ्गीं तां नवपावनभां शुभाम् ॥
> इति चक्रबन्धेन ।

ततः केनचिद्दिवसेन गमनकर्मीकृतपाण्डुरङ्गक्षेत्रः तत्र भवदीयां मूर्तिम् ।

---

१ करे–श्रीहस्तयम् । करे, हि, चक्रम् । इति छेदः । २ लक्ष्म्या लिङ्गितः पद्मतुल्यभागो च । ३ नरवरैः [illegible] । ४ संमर्दः सम्मः । ५ [illegible] च ।

| अयं चक्रबंधः पूर्वपृष्टोक्तः |



| आतपत्रबन्धोयमागामिपृष्ठे |



नतवत्सल राजीवनेत्र मामव यादव ।
नवजीवनदाराव वरादानवजीवन ।

इति छत्रबन्धनेन स्तुत्वा । अथासन्नप्रसवधेनुमिवोभयतोमुखीं कृष्णावेणीमुडुपेनात्रिरिव तीर्त्वा ऋणं पितॄणां तेनैव क्रमेणानेकसुरभिमहिष्यादिभूषितान् ग्रामान् कृष्णानिवोद्वीक्ष्य उडुपवंशावलम्बकदाशार्होत्सारितान् नदीवर्गान् पाण्डवानिवावगाह्य । मधुरापुरमिव अन्धककुब्जादिशरणं धर्मशालाकदम्बमभिनन्द्य करवीरपुरं गतवानस्मि ।

साम्बत्वं मदनस्य शङ्कररिपोः क्षीराब्धिकन्यागृह-
मायत्त्वं कमलस्य तामरसविख्यातिं गतस्याञ्जसा ।
भो वैकुण्ठं समार्यता च भवतो जाता यया साम्बुन-
द्वन्द्वश्रीमतिमञ्चारुनयना श्रीर्यत्र गोत्ररत्नी ।

तस्माच्च निर्गत्य अनेकपारिजातोद्भासितानि गिरिकूटाग्रनिकुञ्ज्योद्यानानि च पश्यन् अनेककासारसम्पदो धर्मशाला अभिनन्द्य किरातगृहांश्चासेवमानः अनेकप्रपापाळीपरिगताः पानीयशालाः सम्पूज्य दुर्जनततीश्च मनसा निन्दन् अत्यन्तरमणीयाः पल्लीरुपहसन् वनिताश्च परिहरन् रामसेतुमगमम् ।
तत्र च ।

कक्षाधिराजोद्भवया कालिन्द्या नीलया सह ।

---

१ मधुर्दीशान् । २ भित्रनेपथ्यप्रभीरवोदर । ३ पाण्डवपक्षे देवरूपाणि स्तुवः पार्थामी: संसारदय: दाशाश भीमसेनदाः भद्रेः पूज्याः धेनवा । ४ धौम्यादन् । ५ महीनामानि धार्तराष्ट्रमितानामानि धेनानि ।

क्रीडन् सिन्धुर्मया दृष्टो द्वारकायां भवानिव ।
तरङ्गहस्तैर्मकरीः सुरापगा मुखेर्पयन्तं प्रसमीक्ष्य वारिधिम् ।
का वा नदी सोत्कलिका न चास यद्बभूव नारीजनतापि तीरगा ॥

अथ च ।

सीताचक्षुर्भद्रानन्ददमब्धिं निरीक्ष्य सेतुं च ।
त्वद्विरहदूनमपि मे सुखितमिवासीत्तदा तु खलु चेतः ॥

तत्र तु । कस्यचित्पान्थस्य वचसा ज्ञातं भवान् पन्नगाचले निवसतीति । ततश्च जातानन्द इत एवागच्छन्मध्येमार्गं कामपीत्यर्द्धोक्त एव किञ्चिदारेचितभ्रूयुगुलं ईषत्तरलितमस्तकं सामिदष्टाग्ररसनं सपर्वतमुखावलोकनजातस्मितं प्रमादमुद्रामामिनीय देव विषयविरसान्यस्य चित्तवृत्तिर्भवत्प्रेम्णाऽकुलीभवति । अस्त्वेतत् । प्रकृतमनुसरामि । देवस्य चरणयुगलमपश्यं यदर्थोयं प्रयास इति ।

एवमाभाष्यालम्बितमौने तस्मिन् उत्पादितकौतुके नारदे देवोपि देवर्षेः कामपीत्यर्धोक्तस्य संवृत्तिरियं भङ्गी सङ्गीतभङ्गी विवशकुरङ्गीहृदयलुब्धकबाणवेधः । किं च ।

भवद्विदितार्थस्य ममानिवेदनं साधनिकस्य पात्रादानप्रक्रिया ।
क्व गता ते भैष्मीहरणकालीना निर्व्याजकृपा भण मुनिकुलोत्तंस॥

अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् ।
आरब्धस्यान्तगामित्वं द्वितीयं बुद्धिलक्षणम् ॥

इति न श्रुतं भवता । कुरु कोमलं मनः । मा भवतु शिरीषकुसुममपि कठिनं इति विविधानुनयकोविदः कथं कथ-

---

१ वराब्धिम् । २ सङ्गीतमिव ।

मपि वृत्तान्तशेषकथनोन्मुखं चक्रे । सोपि सफलप्रायो मे मनोरथसरलद्रुम इति निश्चित्याह ।

देव शृणु सावधानमनाः वारुण्याश्चेतोविलास इव अनन्तमार्गावलम्बिनि मद्देहच्छविकौमुदीभ्रमागतभ्रमद्बालचकोरनिकरपक्षसमीरतरलितवीणागुणक्वणनसमाकर्णनैकाग्रमनसि मय्यागच्छति किञ्चिन्निकट एव संजातेस्मिन् पर्वते पर्वतः सर्वतः सञ्चारितचक्षुरिक्षुरसासारमधुरां मधुराधिप वाचमवोचत् । आर्येतः श्रूयतु भवान् । यदत्र लसच्चक्रः राजज्जलजः व्यालोलवनमालः दिव्यसारसनालीलसत्कमलोद्भासितः गरुत्मत्पक्षिसेवितः सदाशेषभोगिप्रियः इन्दीवरश्यामलकान्तिः अयमयमग्रत एवेत्यर्द्धोक्ति एव जृम्भणारम्भेणाकुलीकृतोयं तदन्वहमपि चेद्देवं भवाञ्छ्रीनिवास एवेत्यालोच्योद्घाट्य नयने कक साम्बातारचन्द्र जय जीवेत्याशिषाभिनन्द्य गृहाण पारितोषिकं प्रियमावेदयसीति कटिकलित गोदावरीस्नानसमयतत्तीरविस्मृतपटीभवत्कृष्णसाराजिनबन्धनपट्टसूत्रं तद्भ्रान्त्या केवलमाकाशमेव समर्प्य विस्मृतदेहभावस्त्वामिव राधाकुचकलशादर्शनेनावस्थितः । ततस्तेनापि कथमयमकस्माद् भूताविष्ट इव चेष्टत इति शङ्कितमनसा किञ्चिदपसृत्य विस्मयाज्जृम्भमाणतारं वीक्ष्यमाणः यावत् पुरः पश्यामि तावत्तमपि काष्ठारमपश्यं न भवन्तम् । स च नाम्ना पक्षधर इति । दैवेनापि औषधविशेषणार्थबहुपर्यटनेन दृष्ट एव स्यात् । यत्तु अमृतान्धस इव अमानवाः । अस्तु...नदपर्छपरा-

१ ई इन्न । २ भ्रमः पुनः भ्रमणमभवत् ।

द्दुर्व्यसनेनानेन वञ्चितोऽहमिति निश्चित्य तस्य परमचक्रवर्तिन इव जृम्भमाणसहस्रपत्रस्य कण्ठशोभमानकनकमालस्य पुटभेदंशोभावहस्य तटनिकटेक्षणमतिष्ठम् । ततःपरं यद्वृत्तं तदस्मच्छात्रस्य कलालापस्य कलत्रं कलकण्ठी नाम किन्नरी वक्तोत्सुका विरराम ।

अथ तदाज्ञया आह सा यथार्थाभिधाना कलकण्ठी ।

अत्रान्तरे देव कुतोऽपि पार्वतीशरीरमिव चन्द्राभरणभूषितं सुमेरुशृङ्गमिव नक्षत्रमालापरिगतकण्ठं विन्ध्याटवीस्थानमिव मृगेन्द्रोल्लसन्मध्यदेशं शेषाचलस्वरूपमिव स्फुरद्राजीवपादं नाटकमिव मनोज्ञाङ्कं मनुकुलमिव लसद्गम्भीरनाभिं रहूगणचित्तमिव कलितभरतागमप्रक्रियमृषिकदम्बामिव सरसङ्गीतज्ञान नक्षत्रवृन्दमिव चन्द्रमुखं माधवाह्निजमानसमिव कुन्तलोल्लासितं यौवतमाविरासीत् ।

तत्र तद्वनिताकदम्बेषु चन्द्रमूर्तिमिव सन्मान्यां सुहृत्तमानां चित्रोत्तरानन्ददायिनीं सलक्षणां गौरीशुकां च तथाप्यनाकलितगुरुकलत्रस्पर्शामननुभूताश्लेषामस्पष्टकलङ्कां दोषानुबन्धरहितामज्ञाततमःसम्बन्धजातविकारां च कामपि कन्यामणीमद्राक्षम् ।

यस्या नारदैषद्दशः केशपाशो हासश्च देवमागमनोज्ञा वेणी गण्डस्थविश्च अर्धचन्द्रद्वयं ललाटमण्डलं कटाक्षक-

---

१ जलधारावनम् । २ अलङ्कारविशेषः । पक्षे चन्द्र एव आभरणम् । ३ नाभिनामा राजा पक्षे नाभिः शरीरस्य । ४ युवतीनां समूहम् । ५ नारदो मेघः नारदश्च । देवर्षिः । ६ ऐरावतः नागश्च ।

दम्भं च सारङ्गाधिकारि नयनयुगं गमनं च रागोत्सरोऽधरः क्वापि पुनि चेतःप्रसरोऽपि चापापकारिणी भ्रूलता मतिश्च चन्द्रभासुरा मुखशोभा देहच्छविश्च सरलो नासावंशः सखीगणश्च कुण्डली कर्णः रोमावली च रतिसुन्दरं रूपं वयश्च चक्रमञ्जुला नाभिः कुचद्वयी च शंखकान्तः कण्ठः पाणिश्च गुरुमनोहरं नितम्बबिम्बं चरितं च हंसकोद्भासिता पद्द्वयी सीमन्तकलितासिन्दूररेखा च अनन्तहृदयङ्गमम् अवलग्नं गुणवृन्दं च विचित्रांशुकाच्छादित ऊरुभागः सर्वावयवसंश्चयश्च देव पश्चाज्ज्ञातं सा कस्यचिद्राज्ञः कन्येति ।

अथ राजदारिका ताभिः समानशीलवयोविलासाभिः सखीभिः सह जले यावद्विहरति तावदेव देव तेनैव मार्गेण सुग्रीवसेनानामिव वलीमुखविभूषितानां मेरुदेवीनामिव नाभिरम्यकुचानां वृत्रगदाघातव्यथितगजेन्द्रवत्स्रकटकानां लघच्छन्नुततीनामिव विरसानां पुष्करावर्तवन्नीरदानाम् आर्याणां मप्यनुभावाश्रयणीनां क्षीणप्रकाशानामपि वृद्धदशानां विनतानामपि वयःसन्तोषरहितानां अदन्तशोभान्वितानामपि तातानां जरतीनां कुलमागमाम ।

ततस्तेभ्यो भयेन द्राघं निर्गत्य सरसः क्षीरपारावारादिव रमा सहमलीकदम्बा विविधलतावलीमध्यवर्तिनीव कल्पलता कांस्मिश्चिदिन्द्रनीलसोपानविराजिते नीलनीरदमण्डल इव सौदामनी क्षणमवातिष्ठत् ।

---

१ सारङ्गं हरिणं हस्तिनं च । २ रागः रक्तिमा प्रेम च । ३ अपायकारिणी इति पक्षे छेदः । ४ हंसकं पादभूषणम् । स्वार्थे कन् ।

अथ तासु तत्सखीषु काचिदभिनवमधुपानमत्ता प्राह । अये काञ्चननिभभर्तृदारिके

ललल्लवङ्गिकागन्धविलसत्सत्समीरणः ।
तंतं तनोति सन्तोषं भो भो भोगीन्द्रसन्ततेः ॥

इति तच्छ्रुत्वा तूष्णीं स्थितायां राजपुत्र्याम् अन्यापि काचन प्रत्यग्रदन्तक्षतदूयमानाधरबिम्बा प्राह । अयि राजनन्दिनि ।

निर्यत्किञ्जल्कगन्धान्धसारङ्गगणसङ्गिनी ।
कलकण्ठचयाकीर्णा कान्तेयं सरसी सखि ॥
हंससारसचक्राङ्गचक्रचक्रैरलंकृतः ।
नयनानन्दनिलयः कस्य न स्याज्जलाशयः ॥

इति तदपि किमपि ध्यायन्तीव तस्याः तरलालापश्लोकाभिधैतस्याः निरोष्ठ्यश्लोकद्वयमप्यनाकर्ण्य स्थिता सा । अथ सा सखी विहस्य पुनः प्राह । अयि धरानायकशरीरजे ज्ञातं ते हृदयम् । तं चिन्तयसि । यश्च ।

नीलनीरदसच्छायः शंखचक्रगदाधरः ।
रत्नाकराङ्गनानाथः कंसनागेन्द्रकेसरी ॥

राधास्तनन्यस्तकरः स रागिजनाग्रगण्यः किल नन्दजातः ।
सकंसहंसान्तकदण्डजातहारैर्हरिः काञ्चनशैलधीरः ॥

तादृितं ते दशायाः अङ्गीकृतं चानेन जनेन तन्नियतिरचिरादटयाति ते चिन्तितम् त्यज क्लेशम् कस्य सत्यतां गिरि यस्य जनस्य यत् ।

---

१ राज्ञीऽपत्यस्य । २ कंसहंसः कंस नामा राजा ।

शितिजलजसदेशदेहकान्तिर्धरणिधरेन्द्रशरीरजातजानिः ।
कलयति स हि हस्तनीरजं ते हरसदृशः किल राजशेखरश्च ॥

यश्च धृतशंखचक्रतया धीरतया च अरिदरकरः । राजहंस-सयोर्हंसकलाधीशतालंकृत इ यहंकृतिरहितः । किं च कलहंसश्च कलहंसानन्दं नाङ्गीचकार । चक्री च नगरस्थितिकलितश्च । गाधिराजजाताश्चर्यचर्यश्च नगाधिराजजाताश्चर्यचर्यश्च यं चाह्लादितनीलं ज्ञातशीतेतरदीधितितनयाधिकरसश्रियं नयासक्तचेतसं दाशरथिं कृष्णं च जानन्ति ।

येन नयेन रञ्जितः किल जनः । यस्य च स्त्रीणां चन्द्राचलकान्तिहारी स्तनः आस्यं च । सरलवाद्या गीः कण्ठस्थली च । किसलयसहजः सदाधरः धरसदृशः स्तनः । यस्य च अधिकलक्षणागायना जनाश्च । अधिककेलिहृद्याः क्रीडाशैला गिरश्च । अधिकजातरागः अधरः लीलाहंसश्च । अधिकाननानन्दाः हरिणाः स्त्रियश्च । अधिकरञ्जकाः साला गिरश्च । अधिकंधरासक्ताः हाराः कर्षकाश्च । अधिकंदराजिता अरयः शान्तिधनस्पदयश्च । अधिकारिजनाश्रियः लसन्ति न लसन्ति च । अधिकरणरमिकाः रथिका आन्धिका स्त्रियश्च । अधियतासारश्रियं दधानो नगरदेशो वनश्च । यस्य पारिचक्रखण्ड-

---

१ शिति कृष्णजलं । २ धरणिधरेन्द्रः हिमाचलः पक्षे धरणिः धरायां गर्भे यस्य एतादृशः समुद्रः । ३ अरिं चक्रं दरः शंखः तौ करे यस्यैतादृशः अरीणां दरं भयं करोति स अरिदरकरः । ४ राजहंसो राज भेदः । ५ ०-सता-हंस कला० । पक्षे ०लता-भर्-उहम्य०- इतिच्छेदः । ६ कलहं-सानं इति परिहारः । ७ कर्षकाणां सीतापहाः ।

कं चोरिचक्रम् । अगदागदासन्नन्दकः सन्नन्दकश्च राजत इति ।

किं च । यस्य चैराधिकानन्दः राजनीत्यां रते च । चैरणजाता गङ्गा कीर्तिश्च । चेलाँकृष्टिः रतिकाले स्त्रीणां रणे अरातीनां च । चेतैःकलितानन्दा दया कटाक्षाश्च ।

यत्र शासति धरणीं कृष्णकेशश्रियं धत्ते कचरचना । राजहंसानलसास्थितिर्हासश्च स्त्रीणाम् । अरिस्त्रियः अकेशा हरिजलजासनश्रीकण्ठदशां दर्शयन्ति ।

अतिलैसत्सङ्गरहितता तैलयन्त्राणां न स्त्रीणां नारिसेनानां च । स्तननहर्षकः घनकालः न स्त्रीजनः । चलतादर्शने नेत्रे क्रीडाशैले च न चेतासि ।

किं च स्त्रीणां कान्तिः कनकं स्तनः करकः कण्ठः जलजः नेत्रं नलिनमास्यं सरसं स्नेहस्थानं नन्दनन्दनः रागो न दीनः ।

किं च । अरसाः अरातयोः घृतकुशासनाः आस्यजाः अरिष्टकारणं दधिकर्णशिरश्छेदाकर्णनं चिरन्तनकथायां हंसानन्दासहता सैंहिकेये । राक्षसानन्दः शरद्गणे ।

अर्थासक्तिः शास्त्रचिन्तकानां । नार्थासक्तिः गीतानन्दश्च यतीनां । न गीतानन्दः सहस्रधारणाकांक्षा ऋषीणां क्षत्रियाणां च ।

---

१ अरा विद्यन्ते यस्यैतादृशम् । २ चराधिकानन्द इत्येकं पदम् पक्षे यथायथम् । ३ चरणजाता, रणजाता च इतिच्छेदौ । ४ इला भूमिः चेल व-स्त्रम् । ५ इतः मदनात् । ६ हरिः विष्णुः जलजासनः ब्रह्मा श्रीकण्ठो हरः । पक्षे हरि सर्पः तस्यः जलजे क्षणे न या श्रीः सा कण्ठे यथा तथा दशाम् । ७ अ-तिल-सत्सङ्ग०-। अति-रसत्व० । न स्त्रीजन इत्यत्र लिखितमशुद्ध-मिति हरताळेन छिन्नमस्ति पुस्तके ।

किं च । लसच्छ्रीजानि स्त्रीजालानि क्षत्रियाधिकजातिजालं च । सदासानि राष्ट्राणि अग्रजातिजालं च । अलं किलात्यन्तकथनायासेन । सदाश्यानि सङ्गतानि धनगृहाणि च हृदयानि च रथचक्रं चेति ।

अत्रान्तरे । यासां चलन्तो दन्ताः न नेत्रान्ताः । चपलाः केशा न हासाः । बृहद्वयः न कुचमण्डलम् । वली वदने नोदरे । भ्रमता मध्यदेशे न कुन्तलेषु । तासां तु जरद्वनितानां भिन्नभेरीसमानः कोपि ध्वनिः व्याकुलीचकार ससखीकदम्बां राजकन्याम् । तथा हि । अयेम्बाम्बाम्बरमणिमपि भीष्मकिरणं पश्य पश्य चण्डकोपो नृपः । यामः पुरीं शीघ्रं गृहाण शुष्कांशुकगणं पेटिकां च राजभार्यायाः हर्षकारणं पङ्कजचयं खण्डय । अच्छाच्छैरम्भोभिरापूर्य कुम्भं भर शिरोभागे भण मम गिरा राजकुमारीमाकारयाकारय । रचय प्रणामपरिपाटीं रमाया इत्युक्त्वा च चिरयन्त्यां राजकन्यायां पुनः किञ्चित्कोपेन निर्दन्त्याक्षराणि विसृज्य किं मयाग्रे गन्तव्यमिति रभसादभिधाय अहहेति दन्त्याक्षरसंसर्गन्यूनदन्तानल्पयः खेदमुद्रामभिनीय जोषं तस्थुः ।

ततश्चेयं राजपुत्री शनैरुत्थाय घनसारसदृशेन केशकलापेन भोगयोग्येन रूपेण अतिमुग्धया दशया अनङ्गरागोज्ज्वलेन वपुषा नाभिस्पृष्टेन कुचमण्डलेन अतनुसुन्दरेण भूषाभारेण धवलस्वच्छाभेन मानसेन शोभमानाभियुवतीभिर्नरतीभिश्च परिवृता ।

---

१ [illegible] । २ न अभिस्पृष्टेनेति छेदः ।

सा वैश्रवणं नीलेन पद्मेन च योजयन्ती अपाङ्गमाशुगं चेतस्ततः प्रेरयन्ती मुदा पीनं पयोधरमण्डलं चन्द्रेण संवदयन्ती चन्द्रभूषणमपि करे व्यवस्थापयन्ती वशीकृतसकलनिर्जरकदम्बा यथागतं गतवतीत्युक्त्वा तस्यां किन्नर्यां संवृतवचनायां प्राह स्म नारदः ।

अथ सवितारि तीव्रे पर्वतेन प्रबोध्यमानकालापगमो देवस्य दर्शनसुखमनुभवितुं अत्रागतोस्मि । देव किं चिन्तयसि । श्रवणादेव सा किं तरलयति तव चेतनाम् । मा भव तरलः तरलो हारमध्यमणिरेव नायको न भवति पुमान् । तिष्ठ मनुष्यवत् । अस्त्वेतत् । देव कथितं कथनीयम् । दृष्टो द्रष्टव्यशेवधिः । तदनुग्रहाण गृहाणाशिषः । साधयामि नारायणाश्रमामिति ।

अथ श्रीनिवासेपि सश्लोकहासं महर्षे आर्षे नाम ज्ञातं किं भवता कुलाभिधानादिकं तस्या युवमानसमत्स्यबडिशगुणजालस्य इति वदति । पुनः प्राह ।

देव भजकजननिर्जरागम अहो लावण्यमहो विलासः अहो चातुर्यम् अहो रमणीयता रमणीमणेरिति जाताकस्मिककौतुकेन क्षणं क्षणं माध्याह्निकावश्यकरणव्यग्रतया क्षणं भवद्दर्शनाभावचिन्ताक्रान्तान्तःकरणतया निरोष्ठे च श्लेषाभियोगे कालं गमयतः ममैतच्छ्रवणेच्छा न संवृत्ता । इयमुक्तिरपकारवती जाता । अहो किं कुर्मः मुनयो वयं अपवर्गवार्तामुपदिशामः । तथा हि ।

विष्णुर्ध्येयो वैष्णवाः सङ्गयोग्यास्तीर्थक्षेत्रस्थानसंसेवनं च ।

१ शेवधिः निधिः । २ पवर्गाक्षररहितां वार्ताम् मोक्षवार्ता च ।

योगाङ्गानां साधनं तत्त्वचिन्तेत्येषा रीतिः श्रेयसे जायते नः॥

किं च किं योग्येयं वृत्तिर्विरक्तानाम् यद्वनिताजनेन सह वाक्संयोजनम् ।अथ वा ज्ञात्वा किं कृत्यं देवस्य कृतविवाहस्य देव कल्याणी विजयीतिष्ठेति ।

देवोपि केयं भवेत् क वा तिष्ठेत् कथं जानामि कं वा पृच्छामि कः शमयति ममाधिमिति चिन्तासीमन्तितहृदयो दर्शितशुष्कमुखविलासस्तत्कालोचितालापैर्नारदं विसर्जयांबभूव ।

एवं सति । माकन्दप्रवालकदम्बचुम्बनमुखितमत्तपरभृतमहिलानिरन्तरोदञ्चितपञ्चमस्वरान्तरितनिजवनिताकृतपरपुरुषसङ्केतस्ल (?) ववञ्चितगृहपतिराराम रामाभयमर्तुमहोत्सवारम्भमङ्गलगीतिकापठनाविरतलोल्लोलम्बानिताम्बिनीश्रुतिसुभगझङ्कारश्रवणसमयसंस्मृतनिजनायकाहितैकाग्रमनीपानिश्चलास्थितमज्जनागतयौवतशातालीकनकसालभञ्जिकापुञ्जराञ्जितमञ्जुवञ्जुलनिकुञ्जपल्लपितसुवर्णमुखरीतटः प्रियजनसङ्केतितवेतसीवनगामियामिनीशामुखकामिनीप्रहयालुशामिनीचरसमानयोमिकराजपुरुषगृहीतनिजकरसंस्पर्शसञ्जातसात्त्विकभावशिथिलिततत्करमुष्टिबन्धपयिनिर्गतललनालोकनमुदितान्तरङ्गभुजङ्गनिकरसंस्तुतमदनकटुकलम्बकदम्बो वनिताकुचाभोग इव [1]बहुसरोजातसमृद्धिर्वीर इव [3]पराङ्गनाशङ्करो हिमगिरिरिव मदकल[4]कण्ठीरवत्रासितपाथिकः सरस्वतीदेह इवा-

१ कामिकाः कुलीनाः । २ बहौ सरोजानां कमलानां समृद्धिर्यत्र । बहुषु मासेषु जाता समृद्धिर्यस्मिन्निति च । ३ पराङ्गनानि शत्रूणां शरीराणि तेषां नाशं करोतीति तथा । परः श्रेष्ठश्च अङ्गनायां शं करोति सः ।४ कण्ठीरवाः सिंहाः ।

जातिभूषितो वनिताजन इव रसालसंहितो रत्नं सकलर्तूनां यत्नं भागधेयं सतीनां सुराजीवोपि सुमनःसन्दोहश्लाघितः अशोकयुक्तोप्यसुमनाः कुसुमाकरस्त्वाविरासीत् ।

अथ तं दृष्ट्वा देवोप्यचिन्तयत् अहो महनीयता वसन्तस्य ॥

आचार्यो मदनागमस्य किमपि स्त्रीमानरुग्भेषजं
कान्तायुक्तविलासिलोकचरितप्राचीनभाग्योदयः ।
यस्त्वागत्य लतासु पल्लवरुचिं सम्पादयिष्यन् भृशं
संजातोत्कलिकासु तासु रमते राजद्रयाः साम्प्रतम् ॥

अपि च ।

भङ्गो माने चक्रशोभा कुचेपि न्यस्ता चित्ते सारमश्रीर्वधूनाम् ।
युक्ते ताभिर्जीवनं वै वियुक्ते पङ्कं पुंस्याश्चर्यचर्येण येन ॥

इदानीं हि ।

कलिकाकलङ्कितं मन्ये यज्जगत्सुमनोचितम् ।
माधवोपान्यथा कस्मान्माधवीजालकावृतः ॥

तदत्र नारदवचनश्रवणाविदीर्णहृदयस्य मम भगवान् धृतसुमाकरसम्पत्सारङ्गभियः कनकश्रीविद्योतमानाम्बरः माधव एव शरणं यदनुग्रहादपि योगी भवेयम् । यदयमचेतनोपि पन्नगाद्रिरङ्गीकृतविपुलनितम्ब इव दृश्यते ।

अस्त्वेतत् । मृगयाव्याजेन वनभूमिषु विनोदयामि मानसमिति विचिन्त्य च बकुलमालामेरितवराहदत्तेन किरातसैन्येन सह पद्मव्यूहमिव विलसत्केसरं वैद्यमिव तिरस्कृतवातवर्गं

---

१ यज्ञेन ब्रह्मणा अनिभूषितः । पक्षे जाति पुष्पैः । २ रसेषु शृङ्गारादिषु आलसे जडत्वे हितः । रसाला आम्राय ।

गङ्गाप्रवाहमिवावर्तहृद्यम् उत्तरगोग्रहणरणमिव स्तब्धकर्णं वर्णसमूहमिव ह्रस्वदीर्घप्लुतसुन्दरं चित्ररथमिव गन्धर्वश्रेष्ठं वणिजामिव भाण्डभूषितं कर्णाटदेशगोरसमिव मेघपुष्पसदृशं वालिनमिव सुग्रीवपरिपन्थिनं मदनमिव मानससम्भवं. प्रथममश्वकुलेषु द्वितीयमुच्चैःश्रवसा तृतीयं वातगरुडयोः अदृष्टवाडवाननमपि राजनन्दनं नीलं कर्णे श्वेतं मुखे सम्पातिनं गमने हयमारुह्य विपिनमयासीत् ।

ततः केचन किराताः भग्नकीचकाः भीमाः शल्यान् दारयन्तः धर्मराजाः शिखण्डिविरोधिनो भीष्मा द्रोणपक्षधराश्च शृगालभयङ्कराः कृष्णाः नागत्रासकाश्च पुण्डरीकद्वेषिणो दोषाकराः पथिकापकारिणश्च शूलहस्ता महाकाला उग्राश्च काननं रुरुधुः । तदा तु केचन जरासन्धा इव वृकोदरं गदया ताडयन्तः केचन कर्णा इव शल्यार्जुनमुन्मूलयितुमिच्छन्तः केचन रुद्रा इव गजान् शूलेन ताडयन्तः केचन कवय इव श्लेषेण नानाशुकवीनुद्वेजयन्तश्चेरुः ।

किं च खड्गी खड्गिनं कञ्चुकी कञ्चुकिनं चक्री चक्रिणमच्छभल्लोऽच्छभल्लं रक्ताक्षो रक्ताक्षं जघान । तदनु भग्नाः कुम्भाः कुम्भिकुम्भाश्च नष्टपत्राः पक्षिणो वनलताश्च मृदिताद्रिना वृक्षाः

१ दर्भो देशः । २ अश्वालङ्कार विशेषो भाण्डः । ३ प्रायेण एतन्नामकेन ... पक्षे ग्रामः ... । ४ वडवाहितं गमनम् । ५ अश्व... भ्रंशे (भाषा) दाय । पक्षे ... फलाः । ६ रक्ताक्षा महिषाः । ७ प... दिनं दन्ताघ ।

वनगजाश्च नाशितशम्बराः वनभुवस्तटाकाश्च छिन्नपुष्कराः करिण्यः पुष्करिण्यश्च उत्पाटितनेत्रा नगा नागाश्च आकृष्टजीवाश्चापा महिषाश्च खण्डितस्कन्धास्तरवो व्याघ्राश्च बभूवुः

स च मृगयाव्यापारः रावणइव नलकूवरं दूषितरम्भं यमेकालदिवस इव सरः अपुण्डरीकं प्रभातकाल इव नभः अकालकालीकरवाल इव भूतलममहिषं युधिष्ठिर इव भारतमशल्यमरण्यं चकार । किं च ।

संजातसम्भ्रमभरैर्वनदेवतानां
वृन्दैरमन्दभयकम्पितमानसैर्यः ।
आकर्णितश्चकितसिन्धुरसिंहकोलः
कोलाहलोऽथ मृगयाजनकण्ठजातः ॥

मृदितपृथुलकुचकुम्भा खण्डितरम्याद्विजच्छदा तान्ता ।
आयासिततनुलतिका रतान्तलीलां बभार वनभूमिः ॥

अत्रान्तरे । गजमपि कुम्भोद्भासितं नीलमपि केसरिद्वेषिणम् अञ्जनाकृतिमपि अनुपमाकृतिं कालमपि गिरीशाकारं गरुडमिव पक्षचरं मुक्तविद्याभिलासमिव परिणतं शेषमिव सदानन्तं विलासिनीजनमिव भ्रमरचुम्बितकपोलमण्डलं मत्तदन्तावलमालोक्य अर्जुनबाहुसहस्रनिरुद्धवनगजमदमलिननर्मदाप्रवाहैरिव सहसाभिरुद्धगतिप्रसरैस्तद्दर्शनत्यक्तधैर्यैर्भिल्लमल्लैः दैवेयं न मृषा किंवदन्ती मारीचनामराक्षसः सा-

1 शम्बरमुदकं शम्बरा मृगविशेषाः 'साम्बर' इति प्रसिद्धाः । २ पुष्करं कमठं च । ३ नेत्रा वृक्षमूलानि नायकाश्च । ४ जीवा धनुर्ज्या जीवाः प्राणिनः ।

रङ्गरूपेण मुनिहिंसनाय संचरतीति स सारङ्गो न मृगः किं तु महामृग इति ज्ञातम् । अथवा गजासुर एवायं उत वा कुवलयापीडः देवेनापि ज्ञात एव वा न विद्मः यदत्रैव कोपि पर्वताकार इति निवेदिते किंचिद्धसन् आः किं भणत मूढाः निरर्गलभुजप्रसारेषु रामश्रीकण्ठवासुदेवेषु अचलोद्धूतिमार्येषु पार्श्वस्थितसुग्रीवेषु जयत्सु का कथा तादृशानां पापानाम् । तिष्ठत्वेतत् । करिकीटः कश्चिन्मर्तुमिच्छति वराकस्तन्निःसृत मद्बाणपातभुव इति यदत्रैव बाणं मुमोच ।

युक्तं शरस्तु पतितो यस्माद्गुणविच्युतो बभूव किल ।
चित्रमिदं यत् त्यक्तः श्रीपतिना मार्गणो वदान्येन ॥

तदैव सोपि द्विरदमणिरणीयसा भयेन द्रुतं दुद्रुवे दूरं करात्प्रहारः ।

पुष्करांमे पतन् रेजे श्रीमान् कृष्णशिलीमुखः ।
चित्रं चित्रमयं मूढः पुन्नागो द्रवति स्म सः ॥

स्थाने खलु मातङ्गजातेः कृष्णविमुखभावो देवोपि विहाय किरातचर्यं तं गजमनुससार । सोपि तस्यामवस्थायां धीरधीरसञ्चारः वासितावशीकरणविदग्धः शृङ्गारशाली चरमोत्तुङ्गस्तननारतलीढः श्यामानां सुन्दरीणां महिलानां गणैः परिवृतायां कस्यांचित् भूभृद्गुवि निपपात गजः कटाक्षश्च श्रीनिवासस्य तत्वेयमङ्गना व्यक्तिदृष्टा ।

मुहुर्गरुन्मत्काङ्कितपाणिशोभा गाथामयूद्रेभितरानहंसा ।
स्मरद्विषोऽशाभिपयोधरश्रीर्नूनं रमायाः सहचारिणी स्यात् ॥

---

१ पुष्पाहस्तार्थं ।

इति निश्चित्य सञ्जातसात्त्विकभावः कथंकथमपि वा रामाभिमुखीभूय ययौ दन्तावक्रः श्रीनिवासकृपालश्च ।

तदनु भगवान् तां राजपुत्रीं अयि सुमते लोलं वकं पश्य उन्मादिनि मदनकलिके पुण्डरीककुलं खण्डय चपले मल्लिकासरं मल्लिपीमियं बधान कोमले मालति पाथि कण्टकीभवत्पुन्नागनेत्रमुत्पाटय ललितमुखामे इन एहि गृहीतराजीवजीवने कृतकृत्यासि उत्पलाभिलाषिणि रक्तं मा त्यज विशालनेत्रे त्वचं दलय कदलीनाम् प्रमादशीले कोलम्बकं च गृहाण इति मृगयामिव वनविहारलीलामनुभवन्तीभिः सवयोविलासाभिः सखीभिः परिवारितां विलोक्य तन्निकट एव स्थापिततुरङ्गश्चिन्तयामास ।

अये इमामेवाह नारदः । तथा ह्यस्याः नागमदशोविणिका न कुचमण्डली । अगुरुविशेषकानन्ददायि ललाटमण्डलं न चारित्रम् । अञ्जनाश्रिता नेत्रद्वयी न मतिः । पल्लवप्रणयिनी अधरच्छविर्न स्पृहा । अतिलसत्सुमनोहारिणी कुचद्वयी न नासा । नक्षत्रेशमनोहरं मुखं न रूपम् । अरम्भासमानं वयः नोरुयुग्मम् । कुवलयमनोज्ञं जघनं न करद्वन्द्वम् । नगगमानुकारी गुणः न गतिक्रमः । अस्त्वेतत् । कथं भवेत् । प्रायेण चन्द्रधन्वन्तरिकल्पपादपादीनां सहोदरी रमेव क्षीरपारावाराद्वोत्पन्ना अन्यथा कथं तेषां गुणगणोऽस्याम् ।

तथाहि । अब्जशब्दवाच्यस्य चन्द्रस्य गुणः नेत्रयोः सुरागस्य पारिजातस्य कुचयोः जैवातृकस्य धन्वन्तरेर्मुखे । दिव्यनागस्यै-

रावतस्य वेण्याम् । मधुनो वारुण्याः अधरे । रम्भाया अप्सरसां ऊरुभागे । गौरस्योच्चैःश्रवसो वर्णे । तिष्ठत्वेतत् ।

किमेषा कन्दर्पशरशरव्यधर्मा प्रापिताके नापि भवेत् । आः कः सन्देहः येनास्याः शरच्चन्द्रदशां प्रापिते गण्डमण्डले सखीजनरचितः मृगमदपत्रभङ्गः कुरङ्गभ्रमं जनयति । स हि पाण्डिमैवैवं जल्पति । किमनया प्रकृतानुपयुक्तया चिन्तया । प्रथमं तावदेतद्विचारणीयम् । किमस्यामहमिव मय्येषानुरक्ता न वेति । अथ वा किं तदद्यापि न निर्धार्यते । कथमन्यथा कूणितनेत्रभागेन चक्षुषा सव्याजं मामियं पश्येत् । निरुद्धोपि कोपि विकारः कथमस्याः प्रसरेदङ्गेषु स्वेदलवमुक्ताजालकैरलंकृताभिनवस्फाटिकाभित्तिधवला कपोलपाली कथमुत्तम्भयेदुत्तरं वासः रोमहर्षणोद्भेदः कथं नर्तयेद्दक्षिणानिल इव स्तनमूलकम्पः कथं शिथिलीभवेन्नीवीबन्धः कथं मुखमालिते स्फुरणलक्षमाणिः कथं स्फुरेत् स्यात्पुण्यधाराशितरङ्गबन्धुरं मम दक्षिणं चक्षुः । कथं यानि भैष्मीहरणकाले शुभानि निमित्तानि तान्येवेदानीं पश्यामि । कथं दूरादेव मां विलोक्य चिरमालोच्य सभ्रूभङ्गमनेन सखीकदम्बेन परस्परं समन्दहासमालपितम् । कथमनया नीलोत्पलदलावतंसया भिनपीतचूतालवालनिकटदेशाया धनितया सकङ्कणक्वणत्कारमस्याः करकमलाभ्यां च तं च मुहुर्मुहुः पर्यायव्यावर्तनकन्धरं पश्यन्त्याः आच्छिद्य निगूढं च चित्रपटं आकुञ्चितभ्रूनिर्भर्त्सितनामिव किमपि उपदिष्टम् । अपि नाम दाहदायिरुत्पद्यते चन्द्रिकायाम् । कदाचिदपि वा देवमैन्त्रमवगमनायाद्वदनारविन्दाभिःसंदष्टीकं वपुः । कथम-

स्थानसक्ता भवेन्माचितवृत्तिः ; कथमन्यगोग्यवस्तुन्यप्येतादृशा- व्यावण्यसर्वस्वं स्थापयेद्वेधाः । एतस्या गुणाकर्णनेन श्रवणानन्द इव स्पर्शेन हस्तानन्दो नासीदिति वामः पन्थाः । भगवन् कुसुमायुध मा जनय क्षणमुद्वेगम् । तावन्निर्वापयामि पूर्णचन्द्रद- र्शनसन्तापितनेत्रयुगलं मत्स्यङ्गदर्शनेनास्मिँल्लावण्यसुधासरसि मुख- जितचन्द्रमसि कान्तितिरस्कृतकाञ्चनमहसि कुचतुलितचक्रवाक- वयसि हृतमन्मनसि अभिजातकन्यामणौ । अथ वा मकरध्वजेन दर्शनदत्तस्यापि आनन्दयाप्यकल्पा निरुद्धं खल्वालोकनसाम- र्थ्यम् । अस्त्वेतदपि । कथं सम्भाषयाम्यलब्धवागवसरः । सूक्त- मुक्तं केनाचित् शास्त्रं सुनिश्चलधिया सुविचारणीयमिति । यतः व्यवहितत्वादहोः कालस्य विस्मृता खलु सा व्रजयुव- तिजनवशीकरणकला । इत्येवं चिन्तयति श्रीनिवासे ।

काचिद्राजपुत्रीसखी कञ्चन वन्यमतंगजं विलोक्य प्राह । आयि भर्तृकारिके पश्यैनं मत्तदन्तावलमयं खलु नारदप्रोक्तो गिरिगहनचारी पुन्नागः यदि त्वयि करं प्रसारयेत्कस्ते शरणम् । अथ वा त्वमपि लसञ्जलिवासिना नात्र तव भयलेशः तद- स्तु तथैव तावदयं शिलीमुखः मदनाग्निर्गत्य व्याकुलयति त्वां तत्र को वा उपाय इति ।

तदाकर्ण्य स्लोके हसति सखीवर्गे अलमलं चपलभाषणैरिति अलीककोपकलुषितायां वर्जयन्त्यां राजसुतायां देवे श्रीनिवासे- पि कल्याणीयमेतस्या उक्तिरमृतासारमाधुरीसोदरी राजसुता

१ वशः दर्शः ।

वयस्या या आश्वासयति मदनमहाभुजङ्गचुम्बितस्य मे माननं अयमयं मिलितोस्माकं वागवसरः । अत एवं वक्तव्यं मदनमहाग्रहग्रस्तस्य सम्बद्धासम्बद्धकथने को विधिः को निषेध इति निश्चित्य । आयि राजमुनासाति किमियमत्रलेति मत्वा त्रासयति। सा चित्रोरुकरवाला तद्रुक्तभयस्याभूमिर्विविधायुधपरिष्कृता च।

तथा हि । अस्याः कुचश्चक्रश्रियं वहति । ललाटमण्डलमर्धचन्द्रसम्पदं धत्ते । चन्द्रहासशोभां कलयति वदनम् । कुन्तललक्ष्मीं स्वीकरोति वेणिका । तदलमेवंविधमापणैः । एवं स्थितेपि दयिते भर्तृदारिकायाः मनोजातभयं तदहं क्षणादेव पूर्यितुं शक्त इति वदति—

कांचित् सखी तां बभाण । आयि मदनकलिके श्रुतं किलैतस्य किरातचक्रवर्तिनो भाषितम् । तन्मूलं भवती किल । इदस्तस्त्वया वागवकाशः । दत्तान्तराणां पुरुषाणामेतादृशो वाक्प्रपञ्चो दृश्यते । तदसम्बद्धलापिनी त्वमेवात्र तिष्ठ । वयमेतां भर्तृदारिकामादाय भवनं गच्छामः । यत्त्वं कुमारीजनविरुद्धाचारप्रवृत्तासि । सत्यपि अनुरागे पश्यति यूनि नावेक्षणम् । उद्विग्नेपि रोमकूलेऽवहित्थामार्तिकृशाकलेन हन्तुमिच्छति अभिमतेपि तरुणे मनोभवाभकटनं इत्यादि कन्यालक्षणमिति ।

एवं वदन्त्यां तस्यां सत्यमाह प्रियसखीति नन्दितनटादिराजपुत्र्या सापि किंचित् कुपितेवाह । आयि शृङ्गारमञ्जरि मुग्धारत्रितस्मापितपयिटकम्त्रे अपराद्धं मया हितासि त्वं भर्तृ-

---

१ मदनमय भवति ग्रान मय च ।

दारिकायाः । एतत्फलमचिरादेवानुभवन्तीं भर्तृदारिकां द्रष्टुमिच्छामि ।

इत्युक्त्वा च विरतवचनायां तस्यां देवे श्रीनिवासेऽपि उन्मस्तकेन मदनेन विस्मृतवाच्यावाच्यविस्तरे अयि सुन्दराङ्गि राजसुते ।

वचसा मा कुरु मुग्धे कुरु रूपेणैव रतितिरस्कारम् ।
कठिना कुचयुगलो ते भवति सरोजाक्षि मानसं मास्तु ॥

इति यावद्वदति तावदेव काचित् नारायणपुरान्तरदासी राजाज्ञाप्रेरिताऽऽगत्य भर्तृदारिके देवी धरा ज्ञापयति पुष्पापचयायागतायाः भवत्याः का खलु वेला जाता महाराजः प्रतिपालयति तवागमनमभ्यवहारार्थी तदागच्छ शीघ्रम् । यामो गृहमित्युक्तवती ।

ततः पद्मावती ससखीकदम्बा तरलतरतारया दृशा आवृत्यावृत्य सव्याजं पश्यन्ती वनात् प्रस्थिता ।

भगवानपि तत्कटाक्षार्धचन्द्रव्रणितहृदयः किञ्चिद्धूयमानेन मनसा धातोर्जीविनीमिव पद्मावतीमुपगन्तुमिच्छन्तीं चेतोवृत्तिं बलादाकृष्य । मूक इव भाषितानन्दने बधिर इव संलापव्यवहारशालिनि कश्यप इवोन्मिषन्मरीचौ ऐरावण इव निजकरोल्लासितपुष्करे धर्मकालाध्वनीन इव कान्तिच्छाये भगवति चित्रभानौ चरमाचलशिखरिशिखरमारोहति यथास्थानमागत्य विसृज्य किरातचक्रं स्नानविधिःपुण्यनदेषु अक्रमकृतसन्ध्यावन्दनादिव्यापारः स्वतारकागुलिरिव नक्षत्रमालाकल्पितपुष्पशयने निविष्टः ।

कलितमुरतिभावां चारुमैत्रीं सुवर्णां
ललिततरपदां तां चिन्तयन् राजपुत्रीम् ।
कृतिमिह वरकान्ताकामुको वेङ्कटेशः
कविरिव न च निद्रामाप स श्रीनिवासः ॥

इति श्रीमत्कवीन्द्रवर्यश्रीवेङ्कटाध्वरिकविराजकृतौ श्रीनिवासचम्पूकाव्ये द्वितीयोच्छ्वासः ॥ २ ॥

---

## तृतीय उच्छ्वासः ।

अथ कथंकथमपि विरहवेदनाभूयिष्टं कालं यापयति भगवति श्रीश्रीनिवासे कदाचित् कुवलयेष्वसङ्कोचकरप्रसरे चक्रानुरागरहिते भूप इव निष्प्रभत्वं गतवति चन्द्रे । पतिव्रतोचितव्यापारायामिव कृतनिजनायकानुगमनायां यामवत्याम् अलमस्माकं कलङ्किनोऽस्य राज्ञः सेवाजनितचलसुखेनेतीव विष्णुपद एव तत्क्षणं लीनेषु नक्षत्रेषु । इयमेव प्रासकालमतिक्रियास्माकमिति विचिन्त्येव मन एव मुद्रितमुखं निवसत्सु मत्परिग्रहेषु नीलोत्पलेषु । राजहंसतयोभयपक्षसमाना वयमितीव निःशङ्कं मधुरतरं कादम्बेषु । सुमनोवृष्टिशोभितानां किं भयमस्माकमितीव सरन्निनादं गायत्सु मिलिन्देषु तदेकशरणेषु द्विजेषु । पुनस्तदुदयमाकाङ्क्षमाणेष्विव तपाश्रितां मासेषु परेषु । गतेपि स्वामिनि धैर्यत्यागो नोचित इति निश्चलप्रकृतितया निवसत्सु चन्द्रकान्तमणिषु । विरामसमयोज्जृम्भमाणकोकशोकान-

लप्रभापटलैरिवारुणदेहकान्तिजालकैः शोणीकृतासु दशदिशासु । पद्मिनीनामयं विकासकाल इति ज्ञापयन्तीष्विव विकसन्तीषु कमलिनीषु । उद्घाटयत कपाटं परिष्कुरुत वीथिकां बध्नीत वन्दनमालिकां सत्कुरुत शरीराणि किं न जानीथायमयमागत एव भगवांश्चित्रभानुः पुरस्कृतसुभानुस्तं सन्तोषयतेति प्रकम्पितवेत्राग्रेषु स्वाधिकारानुरूपमाचरत्सु भटेष्विव तत्रतत्र संचरत्सु प्राभातिकदरफुल्लकमलसंसर्गकषायपवमानपोतेषु । अभ्युद्यतपुण्डरीकश्रीश्रामरश्लाघ्यविभवः परमुदितमत्तसारङ्गसहस्रपक्षः पूर्वतनं दोषाकरं राजानं निर्जित्य अपर इव भूपः शूरास्यातिरमणीयः प्रभातकालोदयः परिष्कृतानन्तः सकलजगत्सु कर्मपरिपाक इव मूर्तिमांस्त्रयीमूर्तिः तेजोभूमा पूर्वाद्रिग्लावण्यसीमा शनैरुल्लास ।

ततश्चान्तिपुष्करिणीयं द्वासिहृजयन्तीमिति कथ्यमानसंकल्पानां तीर्थोपजीविनां क मे करालवः क मे बृसी क मे कक्षपेटिकेति जल्पतां शिष्टद्विजातीनां प्रभातस्नानसमयव्यग्रेषु जनेषु वस्त्रं भाजनं वा मुषित्वाधैव दीयते पणशेषामिति सांत्वय्य तन्मातरं तत्कालहृतयज्ञोपवीतयाचकानां चेटिकारतद्दरिद्रौदनिकाविटानाम् 'अस्यामयमर्थं इति तारतारं पठतां मासपौराणिकानां मह्य न दत्तं मह्यं न दत्तमिति आक्रन्दतां गर्भयाचकानां जातं जातमिति वाद्यमानकरतालिकानां कृपणास्तिकथानिकानां' स्नन मार्गे जल एव विस्मृता श्रीमुद्रा हा वनितोपरि पतासि व-

---

१ मूर्तः । २ अत्रेन्तरः कुत्रचिदधिकः पाठो दृश्यते इति लिखित. पुस्तके ।

राकेण मार्गो दूषितः प्रतिपाल्य मदागमनं विज्ञातेव ते शिष्टता इत्यादिप्रकारेण वदतां जनानां भगवत्याः सुवर्णमुखर्याः उभयतटोज्जृम्भमाणकोलाहलेनोद्बुद्धः यथाविधि स्नात्वा ।

गिरिसानुग्रहत्वं च वसुमत्ता च तादृशी ।
यस्य मैत्री जगत्सारा न वन्द्यः कस्य वा रविः ॥

इति मनस्यालोच्य नमस्याकर्मीकृततपनमण्डलः राजकन्यावियोगदूयमानमनाः केनचिन्मरालकनामकेन नर्मसुहृदा सह यद्यत्र हारितं तत्तत्रैव मृग्यमितीव तमेव वनोद्देशमुपजगाम श्रीनिवासः ।

तस्यां वेलायां उदितभूयिष्ठमालोक्य रविबिम्बमाह बालकः । वयस्य माधव ।

क्रमेण चक्रं संयोज्य भित्त्वा श्रीवासकोशकम् ।
जेतुकामः कुवलयं सूर्यस्त्वमिव निर्गतः ॥

अपि च ।

सिन्दूरैरपि शङ्कितं च घुसृणैः स्वस्थं च काश्मीरजै-
र्विभ्रान्तं कनकोत्करैः शिथिलितं भ्रष्टं कुसुम्भैरपि ।
किञ्चानम्य निरीक्षितं तव जगद्वन्द्यैः प्रतापाङ्कुरैः
गर्वत्यद्य नभःस्थलेम्बुजमुखासां विलासो मुहुः ॥

इतः किञ्चित्पश्यतु देवः ।

दर्पं कोककुलस्य हंससमितेर्लीलां प्रपानालकं
मुद्राणामनैनोः कलम्बनिषयं धातुः परं मन्दुरोम् ।

१ नमस्याङ्किरात् । २ कुङ्कुमैः । ३ गहनस्य । ४ कुरुतेऽनिशं म-
न्मधुराग्रह । ४ मज्जदहनगामस्पानं मानस भरः ।

पर्यङ्कं च वियोगिनीजननेत्रैर्गृहं रमायाः सरो-
जालिं सत्कुरुते करैर्दिनकरः काश्मीरजन्मारुणैः ॥

त्वत्प्रतापभयात्सूर्यो दिक्स्थदोषैश्च वेष्टितः ।
जेतुकामः कुवलयं पुष्करस्थानमाप्तवान् ॥

अपि च ।

रथाध्वश्रान्तस्य रमाचेल्दुर्गं इनीव वक्तुमकम्पार्थी ।
कान्तं निरीक्ष्य भानुं मुग्धमुद्रां त्यजति तत्करस्पृष्टा ॥

यद्वा ।

चन्द्राब्जयोर्मिथो द्वेष इति मिथ्यान्यथा कथम् ।
चन्द्रे विष्णुपदे लीने तस्य श्रीः कमलं गता ॥

इति तत् श्रुत्वा किंचित् स्मितमुखः तमेव प्रदेशं प्रातः यत्र सा दृष्टा मदिरेक्षणा । आगत्य च । कमलचन्दनसंसर्गसिक्तसमीरणस्पर्शवर्धितानङ्गव्यथः स्वगतम् ।

पद्मिनि किमिति क्रीडसि मधुपैर्लज्जालवोऽपि न हि तेऽस्ति ।
हर हर विस्मृतपूर्वं क्व नु कृता मधिकरिकायाः ॥

पथि ते पङ्कजगन्धं सौरभ्यं भ्रमरवृन्दानां चापि ।
पापे चन्दनलतिके जरठभुजङ्गेन परिरब्धा यस्मात् ॥

सत्पत्रावनं हित्वा मधुना भ्रातचिक्रियः ।

को वा न मन्दतामेति तत्रोदाहरणं मरुत् ॥

इति चिन्तयन् ।

देवात्र चाखण्डलतासङ्गता इन्द्रा इव कनककलिकामहिताः दुर्जना इव बहुलतालसच्छोभाः सङ्गीतक्रमा इव भूभागाः । इत उत्तरतो नास्तवकस्तटाकः लतामण्डपश्च बहुचित्रको वृक्षपूगः क्रीडाशैलश्च । विलसद्द्रुचितः पुष्पमकरः पक्षिनिकुरम्बं च सुखयति । इतः पश्चिमतो वनिताजन इव चलदलकः सप्तपर्णः । तत्र शत्रुरिव सोद्वेगः पूगवृक्षः । इति वदतः मरालकस्य वचनमनाकर्ण्यैव मयात्र मृगयाश्रान्तेन स्थितम् ।

अत्र कोपि नयनानन्दोनुभूतः । तदधुनापि निधुवनलीलेव खञ्जरीटानां रञ्जयति लोचनलोभनीया मानसं कस्य न चरणालक्तकसमुद्रिताभूमिरित्यालोचयन्नेव कस्मिंश्चिल्लतामण्डपे निषसाद । मरालकस्तु अये किमयं निसर्गमधुरोपि देवः मनागपि मदुक्तिं नान्तः रचयति । न सस्नेहं पश्यति । न सस्मितं भाषते । न वनभूमिमनुमोदते । न मन्दमारुतमनुकम्पते । तदत्र किं मया मत्स्खलितं भवेत् । भवतु तावत् संभाषयामि का गर्वः प्रभुपादोपजीविनां किं शाठ्येन मित्रधर्मानुगतानां का वा मानगणना धनिकाराधकानामित्यालोच्य पुनः आह । देवात्र ।

---

१ आखण्डलता इन्द्रत्वं आखण्डल्याश्च ता लताश्चेति । २ कनक–कलिका महिताः । कनक–कलि–काम–हिता इति च छेदः । ३ बहु–लता–लस– । बहुल–ताल–सच्छोभा– । ४ विलसद्–द्रु–चितः । विलसद्–द्रुमि (वाटिका)–चितः ।

संमुग्धालिपरिष्कृताञ्जनदनं गत्युल्लसद्धंसकं
राजच्चन्दनचारुचित्रतिलकं पुन्नागभाग्यास्पदम् ।
रम्भोरुश्रि समल्लिकाक्षगतिकं सत्पल्लवोल्लासितं
रम्यं राजशिखामणे समदनं—

इत्यर्द्धोक्त एव तदभिमुखीभूय वयस्य मराळक क्वास्त इति सरभसहानन्दस्मितं पृच्छति श्रीनिवासे ।

—श्रीमद्वनं पश्यत

इति तच्छेषं पपाठ। स्त्रीरत्नमास्ते पुर इति न कथितं भवता। तदाकर्ण्य सखे तदधुना किं श्रीमद्वनेन हीमजीवनेन वा कृत्यमिति कथयन्नेव बाष्पनिरुद्धनयनयुगुलोः ललाटाहितदक्षिणपाणितलो मूर्छित इव स हि निपपात ।

अथ मराळकोपि ज्ञातनेत्रविकारभीनः अहो कथमेनां दशां प्रापितः कया च न वा अतिधीरप्रकृतिरपि देवः तत् स्त्रीरत्नं वा कुतो न भवेत्। अपि नाम सा निगलयेल्लता तन्मृनालेनाभ्रमुर्वंशभं बभीपाद्यपि पद्ववरेण प्रपद्यस्व । धन्या खलु भगवतः कुसुमधन्वनः प्रणामपरिपाटी । यद्वल्गनादपि परीभवमनुभवन्ति पुरुषपुण्डरीकाः । तदधुना मया किङ्करेन भवितव्यम् । सर्वथा प्रज्ञाविधुर एवास्मि संवृत्तः । अत एव मृगयापराहतोन्य इव स्थितो देवः । तत्कथमाश्वासयामि यदि तन्मनमेवानुसरामि नाहं स्वभावतो व्यसनिना मत्नोत्साहनं उपारिनभ्य जलदिक इव विषमां दशां प्राप-

---

१ पंगवनर।

येद्रस्तल्लाभे तूभयलोकभ्रष्टताम् । यदि वा निषेधयामि तर्हि सद्य एव प्रणयप्रसरभङ्गः । सर्वथा नमोऽस्तु धात्रे । येनायं निर्मितः सस्नेहपाशः येन बद्धः पुमान्नेशः स्वगात्राणां चालनेपि सूक्तमिदं केनचित् ।

दीपे वा तैले वा पतति पतङ्गो विनश्यति क्षिप्रम् ।
अतएव भणामि सखिस्नेहो वह्निर्न किञ्चिदप्यूनः ॥

इति । भवतु तावदेनमन्यतो नयामि इति संचिन्त्याह । देव धीरमरुते इतः किञ्चिदविदूर एव सुवर्णमुखरी । तामनुसृत्य स्मरशरजर्जरितमानसमाश्वासयतु देवः । यतः ।

उत्फुल्लकेसरावलिविलसत्कमलालिपुण्डरीककुलम् ।
भ्राम्यच्चक्रकदम्बं तद्वनयुगलं न कस्य मोदाय ॥

इति । तदनु श्रीनिवासोपि वयस्य मरालक सायन्तनसमयदलदिन्दीवरदामकोमलेन तत्कटाक्षेण विद्धस्य मम हृदये व्रीडा सुमनता गाम्भीर्यं धैर्यमन्यत्किञ्चिदपि वा मरुता व्यञ्जकं न तिष्ठति । तत्किमपि सूक्तमसूक्तं वा मा कथय न प्रभुरस्मि मनसः इति कथयन् साभ्यसूय इव तूष्णीं बभूव ।

तदा मरालकोपि । अये वराकेणानेन मदनपिशाचेन विरहव्यथागिरिशिखरस्थितिमारोपितो देवः । तथा हि ।

न बध्नाति रतिं तल्पे शिल्पे च न सुखयन्ति वीणाः । प्राणाश्च न स्पृहयन्ति राज्याय भोजनाय च ॥ अपि च । अङ्गीकरोति बाधिर्यं न माधुर्यम् । सङ्कुचिता वाक् न शुक् । वि-

१ चक्रयुगलं मरालयुगलम् ।

स्मृतं चातुर्यं न कातर्यम्। गता स्फूर्तिः न चार्तिः। वर्धितं व्यसनं न हसनं। क्षीणा रुक् न मनोरुक्। उपचिता बाधा न क्षुधा। तदत्र दैवमेव शरणं मम मन्दभाग्यस्य सत्यमाह भगवान् मुरमथनः।

रिङ्खत्तरङ्गचलदम्बुजकोशनिर्य-
त्किञ्जल्कगन्धभरवासितवातपोताः।
कन्दर्पबाणगणभिन्नहृदः क्षतेमे
क्षारस्य रीतिमधुना कलयन्ति हन्त॥

यतः।

पुण्ड्रेक्षुचापवरसङ्गतभृङ्गमौर्वी-
निर्यन्मरन्दविपरूपितपुष्पबाणम्।
कामस्य सोऽथ सहते परिरम्भलग्न-
कान्ताकुचाग्रहरिचन्दनकङ्कटो यः॥

अस्त्वेतदेवं मदन इव मां व्यायामयो नितरां बाधते।

प्रायेण तृषितो लोकोऽपि सलिलं पातुमिच्छति।
अन्यथा पुष्करस्थानं प्राप्नुयाद्धर्मा कुतः॥

तदिदानीम्।

निर्यन्मारन्दधाराभिलद्दलिपटलीगीतमाद्यत्कुरङ्गं
छायामायाप्रनृत्यच्छिखिकुलमसकृत्कोकिलालापहृद्यम्।
येऽस्मिन्महीमनूनमृगरल्लान्तारोदसंवासिनाशं
नीडक्रीडद्विजालि मम च भवनं न स्मरामि मन्ये॥

इति भणित्वा इतस्ततः सञ्चारितचक्षुः कामपि वनोद्देशमन्-
रन्तौ मान्येत्कोऽप्यद्भुतं विलोक्य।

---

१ कान्तिः। २ मुक्तं।

पुन्नागगण्डतलचुम्बनलोलचेतो-
वृत्तिर्जहासि नितरां कनकाभिलाषम् ।
श्यामे भ्रमद्भ्रमरराजिमनोहरे त्व-
माचन्द्रतारमवनौ जय जीवमुग्धे ॥

इति यावद्वदति तावदेव यदृच्छया कयाचन वनितया तेनैव मार्गेण क्वापि गच्छन्त्या समाकर्ण्य आभुग्नकण्ठकोयामिह धन्यो मामाशिषा वर्धयति पृच्छामि तावदित्युपसर्प्य भद्रमुख को भवान् महानुभाव इति ज्ञातुमिच्छामि इति सादरं कृताञ्जलिपुटयोक्तः साश्चर्यं चपलाक्षि अत्याम्रतरारावालभरणीमव क्षणं श्रान्तास्त्वहमपि कश्चित्पान्थः क्वासि त्वं क्व यासि किं ते प्राणी इति तामभिधाय तयापि तत्कालरूढपरिचर्यया तथास्त्विति जल्पन्त्या ।

छाया न्यग्रोधसाले परिमललहरी चन्दने किंशुकेस-
त्पौष्पी शोभा फलश्रीरपि खलु कदलीवृक्षवाटीषु लभ्या ।
किं तैरेकैकसंपत्परिकलनगुणैः सर्वसम्पत्समृद्ध-
क्षोणी मन्दारचूतद्रुम तव गरिमा मद्गिरामप्यभूमिः ॥

इति रसालद्रुमस्तवनव्याजादात्मानं स्तुवन्त्या सह तत्रैव क्षणमतिष्ठत् ।

इतो देवोऽपि अहो किमिति वक्तव्यं यदियं कल्याणी मन्मेमर्मं न जानाति इति त्रिभुवनचातुर्यनिधावस्थानदोषारोपः ज्ञात्वापि तूष्णीं तिष्ठतीति न तादृशो प्राणी जीवेः । ज्ञात्वा वा किमिति मदुक्तविरुद्धालापः अद्य श्वो वा सफलो भवेन्मे मनो-

१ पद्यादिरिति टिप्पितपुस्तके टिप्पणी ।

स्थ इति तावन्निःसरन्ति प्राणाः कन्दर्पहतस्य तदेव स्पष्टं न निवेदितमित्यधीरतालाघवं कस्मैचिन्निवेद्य सुखीभवामीति चरणलग्नकण्टकचालनरीतिः अत्मैतदनुरागेणेत्यरसिकता। दैवमेव शरणमिति साधारणसरणिः। समयत्नेन भवितव्यमिति पिष्टपेषण—न्यायः। मदनादेनैव शिक्षयामीति अकाण्डताण्डवविधिः। एतदुभयत्रापि सममेति चातुर्यामासः। देहं त्यजामीत्यबुधचरणानु—चरप्रसङ्गः। किं च।

निद्रा न याति नयनं व्याधभयात्ता मृगीव कान्तारम्।
अचला न चित्तवृत्तिर्नौका तुन्नेव वायुना जलधौ॥
रागस्तीव्रं प्रसराति सुगुणो गुणिनां यथा लोके।
आवेगः शीघ्रतरः प्रतिभाक्रमेवत् कवीन्द्राणाम्॥

इत्यारमन्येवालोचयन्मदनवेदनातिरस्कृतेतरवेदनां मनःकल्पितां तां कान्तां स्वसमीपमागतामिवाकलयन् प्रसारितबाहुयुगलः आलिङ्गितुमिच्छन् तत्र किमप्यदृष्ट्वा। अये वञ्चितोस्मि मदनहतकेन यौवनेन दैवेन वामेन वा। अथ वा स्मृतेरेवापराधः। यया नेयं वानेतेति ज्ञापितम्। तथा हि।

ईषद्धासतरङ्गितायरपुटोन्मीलन्निवेधासर-
श्रेणीसूचितरागसागरमिलल्लज्जानदीमकमाम्।
क्रोडे तां प्रणिधाय चुम्बितुमुपक्रान्तेय कान्तामणे
मय्यानन्दघुनै विघातमकरोत्काचित् स्मृतिः पापिनी॥

इति चिन्तयन् स्थितः। तिष्ठत्वेतत्। इतः सापि स्ववृत्तान्तं वक्तुमारभत।

---

१ भैरिता। २ स्मृतिभ्रमः।

ज्ञात एव किलानन्तामितामितमतिसमस्तलोकस्थितसभास्तारसंस्कृतनिखिलवस्तुविस्तारः तार इव तरुहारिणकुलोत्तरः उत्तर इव गुरुगाङ्गेयकर्णभूषणहारिनरोपाचितकीर्तिसंख्यः [1]संख्यावानिव सुरसभावमतिदक्षः दक्षिणेष्वक्षीणाक्षिसंमददायी द्रविडो नाम देशः । यत्र च निरन्तराक्षरामृतनन्दितजगतां गवां ब्राह्मणानां च परिपालनेनामृतजीवनानां देवानां द्विजानां चाशिषा गोत्रानन्दकोऽप्यगदः सुखेन जीवति लोकः । तथा हि ।

तिमिरबाधा कृष्णपक्षे पुण्डरीकोत्पत्तिः सरसि पाण्डुकथाश्रवणं महाभारते रोहिणीसम्बन्धश्चन्द्रमसः कुसुमपतनमालवालेषु ऊष्मवायुप्रसारोः ग्रीष्मे क्षयः संवत्सरेषु । किं बहुना ।

मणिः सरुक् नदीवर्गः सदा बहुलगद्गदः ।
सामयश्रीरथाभाति दैत्यदानवमण्डले ॥

यत्र च । मालिन्यान्विता आरामा न रामाः । राजद्वेषिणः कोका न लोकाः । किं च । निषादादिजातिभेदसंकुलाः स्वरा इव भूधराः । चरणप्रहारमुदिता अशोका इव वीरलोकाः । तस्यादृशस्योपवर्तनस्य मध्ये अस्ति पुरन्दरपुरःसरनिलिम्पजनतास्तुतसंपत्प्रपञ्चमणिमयायमानमानाकल्लोलमनिबिम्बायितशोभाभवनं वनमिव कमलानामरस्थानम् आस्थानं सर्वसम्पदां पद्मवाग्निशान्तरमणीयं लसत्सुराजन्यमप्यदृष्टपुराजन्यं नारायणपुरं नाम नगरम् । यत्र च । सूर्यसोमसन्ततिपाटिताः वारा इव धीराः । वातगतिमन्थरकुरङ्गा इव तुरङ्गाः । श्रीनिवासयोग्यानि वनानीव भवनानि । द्विधाविप्रपक्षेन ।

१ वानर विशेषः । २ गुरु: । ३ द्विजः ।

प्रजारञ्जनं वीक्ष्य राज्ञोस्य देशे पुरी पन्नगानां किलात्रागतेति ।
न चित्रं प्रियायोगिनां सा यतस्तद्भुजङ्गाः पुराणप्रसिद्धा बभूवुः ॥

यत्र चास्ति प्रशस्तप्रतापज्वालावलीकवलितनिखिलाहितजन्यनिर्जितसौजन्यवर्जितराजन्यवनिताजननयननीलनीरजमालाविशृङ्खलगलदश्रुधारानदीमातृकायमानभुवनश्लाघितयशःप्रसरः सर इव सुनायकगुणमणिः मणिरिव सन्मालामध्यस्थितः राजा कल्याकाशराजो नाम ।

यश्च युधिष्ठिर इवानन्तविजयघोषपूरितदिङ्मण्डलः अर्जुन इव देवदत्तसम्पत्तिरस्कृतसुरासुरः जरासन्ध इव भीमयुद्धविशारदः । यस्मिन् रक्षति क्षितिद्वन्द्वं युग्मं । विग्रहो देह एव । कलिर्युगमेव । किं पल्लवितेन ।

प्रलम्बना हलिहेपिष्यमुरेपि सैरेपि न ।
पयोधरयुगे नैव रमणीनां कदाचन ॥
शङ्करः पुरपेषः स्त्रीषु षण्ढी नगात्मजा ।
कुमारेषु महासेनस्तारकानन्दघातुकः ॥
स हि राजहंसमण्डलजनाश्रयः स्पर्शनोद्भवनिदानम् ।
कल्याणशब्दगुणयुक् राजाकाशाभिधो जयति ॥

अथ कदाचिद्विषयपालः एकभार्यासक्तोपि प्रजारहितः । जनकपत्नीष्वपि जनवापेक्षी मदनमूर्तिरिव कमलोदराज्जातां काञ्चन कन्यरत्नमलभत । ततश्च गतेषु केषु चिद्दिवसेषु ।

मृगाङ्कीयं जनयत्यनुदिनमवनीपते मुदे भवति ।
इति सेर्ष्येव कुमार प्रासूत तदा धरादेवी ॥

चित्रमिदं शृणु ।

तोषयामास नृपतिं तत्कलत्रं धराद्वयम् ।
तत्रैका गोत्वमासाद्य महिषीभूय चापरा ॥

अस्त्वेतदपि । भूयसी वेला सञ्जाता तत्संक्षेपतः कथयामि कथनीयमशेषम् । अन्यदा तु राजपत्नी धरा देवी प्रथमोच्छ्वासितकुसुमकलिकयेव मल्लीलतां शरत्कालकलयेव राकानिशां निलिम्पतरङ्गिण्येव हरचन्द्ररेखां नवनवोन्मेषशालिबुद्ध्येव कविकीर्तिं विनयसम्पदेव विद्यां अभिनवयौवनोद्भत्या राजमानां तनयां विलोक्येयं किल विवाहयोग्या जाता । अस्याः मानसकासारमिव तुच्छीकृतसकलसरोजातं गणिकासमूहमिव रक्ताशोकनवपल्लवोल्लासितम् अनिरुद्धमिव चित्रलेखालंकृतं पाणिं गृहीतुं कः पुमान् कृतसुकृतराशिर्वर्तेत इति न जाने । न केवलं मनुष्येष्वपि । यतः इन्द्रोऽभूदृज्ञाता नासः सूर्योऽहंमः चन्द्रस्यैकदृक्श्रवणः । इत्यालोच्योत्तुङ्गसौधगतमणिभूमिकायामुपतिष्ठन् प्रसन्नचन्द्रमण्डलमपेक्ष्य ।

द्विष्टेन दत्ता सा शोभा चन्द्रं प्राप्य लसत्यलम् ।

इत्युक्त्वा किञ्चिद्धसन्तं आकाशभूपमासाद्य मातरम-मभणद्देवी ।

पित्रा दत्ता यथा कन्या प्राप्येव सदृशं वरम् ।

---

१ धरायां । २ मुदा ।

इति । ततश्च देवोऽपि किञ्चित्तरालितमस्तकं माह । देवि सत्यमेतत् । मयापि ज्ञातं पूर्वं । किं तु । सरस्वत्या इव प्रवालकरायास्तव नन्दिन्याः सदृशो वरः क इति चिन्तयन्नपि न निश्चयं प्राप्नोमि देवेष्वपि किं पुनर्मनुष्येषु । यतः शिवः पृषा च सदारदः इन्द्रः समुद्रश्च नीरसानन्दः । अस्त्वेतत् । तरुणि सखात्रैरपि कन्या मा भूत् । पश्य ।

मुग्धे भूतेशभूतेशशिरोमण्योस्तु को वरः ।
श्लाघ्यो दक्षस्य धिक् कन्या तात तां दुःखजीवनः ॥

इति । अथ सा भर्तृगदितमाकर्ण्य हंहो किमुच्यते ।

दक्षः पुण्यवतां श्रेष्ठो मोचेत्तस्य कथं भवेत् ॥
एको राजा द्वितीयस्तु जामाता राजशेखरः ।

किं च ।

दत्वा पाश्चात्यिकामात्रं नरमात्राय पार्थतः ।
धर्मं गुणं च विनयमपि किं नाप भाग्यतः ॥

अतः समयत्नेन पुरुषेण भाव्यं दैवं तत्सहकारि भवति इति महात्मनां वादः । अतः परमार्थपुत्रः प्रमाणमित्युक्त्वा तोपमासीत् । विरतवचनायां तस्यां देव्यां स्वयंवरमहोत्सवाय राज्ञा यत्नमानेन सर्वेऽपि भूतलभाजो राजपुत्रा आकारिता आजग्मुः ।

तत्र केचन शेषा इव लम्बमणिमालाऽहाराः कुण्डलिनो वारुणीप्रमदाः कञ्चुकिनो रसातलं भूषयन्तो भुजगाः केचन कैला-

सपतय इव सार्याः वृषभियाः सुकुमारा अहीनमालाभरणा राजशेखराः केचन तुहिनगिरय इव अचलसम्बन्धयोग्याः रूपेण मेनकामपि मोहयन्तः अनेकशिखरश्रीविराजिताः लसत्कटकाः सपक्षनन्दनाः धराभृच्चक्रवर्तिनश्च केचन दिग्गजा इव भद्रासनशोभावहाः शृङ्गारसुन्दराः सार्वभौमादिकसम्पदश्च ।

अथ तान् राजपुत्रान् देवस्तां सभामनयत् । या खलु महाराजैरिव प्रकृतिहृदयज्ञैः दुष्पुत्रैरिव गोत्रामयैः लोलुपैरिव तीव्रकरणैः अनल्पशिल्पिवर्गैः स्वर्गविस्मापितविश्वकर्ममानसैर्निर्मिता ।

तस्यां किल संवर्तकालकलायामिव अम्बरमणिगणभूषितायां वरुणभार्यायामिव अनन्तरत्नच्छायोद्भासितपुत्रिकादर्शनहर्षितजनचित्तायां मयूरैरिव भासुरचन्द्रकान्तैः गरुडैरिव विलसत्पतङ्गमणिभिः कपिभिरिव सुनीलैः प्रभातकालैरिव पद्मरागोज्ज्वलैरिन्द्रैरिव सवज्रैः वसन्तवृक्षैरिव समवालैः मणिजालकैरलंकृतायां सभायां । भोगिष्विव दान्तेषु दानेषु हिरण्यराजितेषु वनसन्निवेशेष्विव बहुलताम्रेषु क्षुद्रग्रामेष्विव दुर्वर्णप्रचुरेषु शरान्निशाकालेष्विव ताराभिरामेषु द्रुपदराजेष्विव अनेकवरपादसमर्पितपाञ्चालिकेषु आसनेषूपविष्टे राजपुत्रकदम्बके । नटनटितशालभञ्जिकापुञ्जेषु तद्दर्शनाश्चर्यनिश्चलजनेषु च विभाविते जडचेतनविपर्यासे चलनक्रियानुमीयमाने आगारचित्रप्रतिमाचारग्राहिवनिताजन-

---

१ न-हीन माला-० अहीन-इनः । इनः पतिः । २ लसन्तः कटाः पर्वत भागा यस्मिन् । पक्षे कटकं हस्तालङ्कारः । ३ पुत्तलिका ।

विवेके विबुधभूपसंकेतदृक्प्रसारमूकीभवत्सभाजने सभाजने तत्र-तत्र पर्यटति ताम्बूलकुसुमचन्दनपटवासादिमङ्गलद्रव्यदायिजने । राजाज्ञयाकारितभर्तृदारिका शचीव निर्जरनारीकदम्बपरिवृता मुग्धमुग्धनेपथ्या रङ्गधरां सा तुङ्गकुचश्रीरपि च मूर्ध्नि भूपतिपङ्क्तिम्[1] । ततस्तु तां चम्पकवल्ली नाम सखी प्राह । भर्तृदारिके पश्यैते राजपुत्रास्त्वयि संसक्तचेतसः । तदेतेष्वेन्यतममङ्गीकुरु । कथयाम्येतेषां नामरूपक्रियागुणान् । तथाहि ।

एष किलानेककाण्डचक्रकीर्तिसम्पत्क्षोभमानवाहिनीभरभञ्जितविपक्षभूभृत्कदम्बो महासत्त्वप्रचाररमणीयो दर्शितानेकनिकटकान्तारागोज्जृम्भमाणोत्कलिकोऽयमगाधहृदयो राजनन्दनः सिन्धुराजो नाम । एष किल सर्वतोमुखानिरुद्धसञ्चारसार्थकितानिमिषचूडामणिविभवः निजविलासस्तोकिताप्सरोगणमहिममहितः उडुपतरणिवंशावलम्बिजनाकलितरसानुभावः राघवसदृशः मत्स्यराजः कन्दर्पकेतुर्नाम । एष किलानेकभूमिकाग्रहणविद्यानुरूपविविधशिक्षाबलजागरूकपरिवारपरिवृतो नृत्यत्प्रमदाधिकरणस्थानभूषायमाणो लसदङ्गहारो रागशाली आनर्तदेशाधिपतिः कलकण्ठो नाम इति ।

शौर्यशालिनि तदा प्रियसख्या वर्णिते सदसि राजकदम्बे ।
स्तोत्रपाठरसिकादपरं नो मागधान्नृपसुता बहु मेने ॥

तदनु तेषां हर्षेण सहाकृष्य दृष्टिं अन्तःपुरं गतायां भर्तृदा-

---

१ पात्रयुक्ते । २ देवनान्यः तरुण्यश्च । 3 उत्कलिका उत्कण्ठा स्त्रीणां भावविशेषश्च । ४ चन्द्रस्य सूर्यस्य वंशयोरुत्पन्नजनज्ञातस्वभावः । पक्षे दैवते ज्ञातस्वभावः ।

रिकायां प्रतिकलं जृम्भमाणयौवनभरलोचनलोभनीयावस्थायां मदादौ जने कर्तव्यमूढे देवे आकाशभूपेपि चिन्ताव्याकुलचेतसि यथागतं गतवति मिलितराजवर्गे । अतिक्रान्ते कस्मिंश्चिदिह काले कदाचित्परिवादिन्या विपञ्च्या अपरिवादिन्या चर्यया च श्लेषेण कान्तिकलापेन नवरूपेण गुणवृन्देन युक्तः कोपि मुनिरागत्य राज्ञा पूजितः कंचन, युवानमवर्णयत् । पश्चात् ज्ञातं स मुनिर्नारद इति ।

परं स राजपुत्रः क इति न जाने । तस्मिन् मुनौ यथाभिमतं याते भर्तृदारिका तु सुकृतसारसर्वस्वे तद्वर्णितराजकुमारेनुरक्तहृदयासीत् । अन्यदा वसन्तकाले उपचितमनोभवविकृतिः एकत्र स्थितिमसहमाना श्रवणमात्रगोचरे संकल्पनिर्मितदर्शनसुखदे तस्मिन् भागधेये कलातिप्रणयाविरहविनोदनाय सुवर्णमुखरीतीरमुपससर्प सखीवेणी । तत्र कंचनमृगयासक्तं किरातराजमपश्यत् । शृणु सखे तुनामिदं वृत्तम् ।

स किरातराजः स एव राजपुत्रः यस्तु नारदोक्तगुणकर्मरूपकलापः । सोपि च ताम् । अथैतस्मिन् मिथुनमनुरूपं यद्येतन्मेलयेद् विधाता तर्हि सफलस्तस्य मनोहररूपनिर्माणप्रयास इति मन्दमन्दं जल्पति सखीजने कालातिपातभिया प्रथमं प्रस्थितायां भर्तृदारिकायां सोपि किरातभूपरक्षणं तत्रैव लतामण्डपे स्थित्वा स्वाभिमतदेशमगमत् ।

---

१ [illegible] । २ उत्तमतां दृग्गुणगणैः । ३ वाचे इति शेषः

ततः प्रभृति गजेन्द्रगण्डमण्डलगलन्मदासारमाधुरीसंहितामिलिन्दाङ्गनेव ननीरजातस्पृहा देवेन्द्रचित्तवृत्तिरिव नभोननसञ्जातप्रीतिः कुकविवाग्विलासइव मृदुलां शय्यां नाङ्गीकरोति । दुष्टशूर्पश्रुतिरिवालिमञ्जुलशब्दान् न सहते । एवं स्थिते ।

मन्दे मारुतजातविक्रमभरे चेके च शोकाकुले
निर्वाणे सुमनोगणेऽभिविलसत्यब्दा पलाशिव्रजे ।
भिन्नेऽस्मिन् कुमुदे शिलीमुखचयैः रामायणप्रक्रियां
सम्यग्दर्शयतीव मित्र शुशुभे तारापतिः केवलम् ॥

ततश्च गगनगङ्गापुण्डरीकगलन्मारन्दधारासार इव हरिहयोद्यानविहरदैरावतगण्डमण्डलकषणच्युतहारिचन्दनतरुचूर्ण इव मिश्रीभवन्नारदे जगद्धवलीकरणविशारदे निन्दितक्षीरे त्रासितजारे शुभ्रीकृतनिखिलकान्तारे स्तोकितचकोरकक्षुधि चक्रवाककामकेलिरुधि वर्धितस्वाधीनपतिकाकामक्षुधि कुमुदभेदि घर्मनुदि उन्निद्रशम्बरशिराश्छिदि पथिकहृद्रोगे वर्धितरागे विकचाविकचभावानुमीयमानेन्दीवरपुण्डरीकविभागे पञ्चमस्वरविज्ञापितापिकमुखविवेके पारावारानन्दपरिपाके चुचुकिततमसि चालितयुवमनसि स्फुरच्चन्द्रमसि प्रवृद्धकोकिलागीते धवलीभवन्मन्दवाते

१ मुदितगर्वमाः । २ नभोजनाः देवाः पक्षे नभ— श्रावण—भ इति छेदः ३ शूर्पश्रुतिः हस्ती । ४ कुसुमसम्बन्धिनि वायुवेगे च । ५ चन्द्रे पक्षे त्रिदिवे । सेना समूहे च । ६ सुमनसो देवाः कुसुमसमूहे देव सङ्घेच । ७ पलाशिनां वृक्षसमूहे राक्षससमूहे च । ८ कुमुदे कुमुदे वानरसमूहे मर्कटे च । ९ बाणः भ्रमराश्च ।

मुकुलितवारिजाते सम्भोगशृङ्गारानुकूलसुरपारिजाते विमलचन्द्रिकाप्रसारे उदितभूयिष्ठं पूरितसंयुक्तयुवजनताभीष्टं भूषितपुरुहूतकाष्ठं सन्ध्यासमयतापसलोकविस्मृतस्फटिकमणिमालाभ्रमदपरिमललोभनिश्चलनीरावनीलीनचञ्चरीककुलालंकृतसुवर्णमुखरीकैरवं द्रवीभवन्निजशिलाजालदुर्लङ्घ्यकुल्यारचनाविघ्नितनवाभिसारिकामनोरथपरम्परारम्भम् अत्युच्चमाकन्दतरुशिखरगतकोकाङ्गनागलदश्रुबिन्दुसन्दोहाकालवर्षागमभ्रमतोषितपीतचातकचक्रवालं चन्द्रमालोक्य ।

गोभिः परिवृतं भाति सश्रीकं चाब्जमण्डलम् ।

इति मदुक्तिमाकर्ण्य किंचिद्धसन्त्याः ।

नो चेत्तत्र कुतस्तिष्ठेत्सारङ्गः प्रणयाकुलः ॥

इति वदन्त्याश्चम्पकवल्ल्या वचनमनाकर्ण्येव विरहभारकृशाङ्गी मां प्रत्यवादीत् । हला पश्य ।

चन्द्रोयं भ्रमसंगतेन विधिना विष्णोः पदे स्थापितः ।
पूर्णत्वं गमितः सुलक्षण इति ख्यात्यापि संयोजितः ॥
चक्राह्लादकरत्वमेति कमलानन्दं विधत्तेथ वा ।
स्नेहं वा किमसौ त्यजत्यपि मेघोः पीतांशुको वा भवेत् ॥

अथ क्षणमिव ध्यात्वा पार्श्वस्थितायाः मदनकलिकायाः पाणिमवलम्ब्य सखि मदनकलिके ।

---

१ गोभिरुपवेष्टितम् । २ किरणैः वृषभैश्च । ३ शशाङ्कः लाञ्छनं हरिणश्च । ४ विष्णोः पदे आकाशे पक्षे यथार्थम् । ५ कमलाया लक्ष्म्या आनन्दः पक्षे कमलानामम्बुजानाम् । ६ मधोः अमृतस्य दैत्यस्य च ।

चन्द्रोयं पद्मिनीद्वेषी पुण्डरीकविरोधकृत् ।
तस्य राकापतित्वं च राजत्वं चेति विस्मयः ॥

इति संलपन्त्येव लीलाकमलदीर्घिकातटमुपजगाम । तत्र निःश्रीकाणि कमलान्यालोक्य कोपतरलिताक्षी भ्रूकुटीमाबध्य चन्द्रमाह ।

धात्रा तात धियार्चितं सुरगजाधीशेन हस्ते धृतं
क्षेत्रेषु प्रथितं प्रियव्रततनूजातेन संरक्षितम् ॥
शुभ्रांशो जगतां सुजीवनमये निन्दस्यपैतादृशं
हंहो पुष्करमाश्रयं निजमपि ज्ञातोसि जाल्मो भवान् ॥

तदस्तु किमस्माकं जगच्चिन्तया ।

हंहो कलानिधिरयं बुधनन्दनोयं
सर्वज्ञमौलिमणिरित्यवदं सदैव ।
दोषाकरोयमिति कस्य पुरो मयोक्तं
मत्पीडने न हि निदानमिहास्ति किंचित् ॥

अथ वा किं प्रार्थनया ।

जीवैवधूग्रहणकलाप्रवीणता ते त्रिलोकविदितैव ॥
सम्प्रीत्य मामपि बन्धूजीवग्रहणप्रवीणतां याहि ॥

अथ मदनकलिकायां । अहो आश्चर्यम् । यदियमनिज्ञातरतिसुखापि तस्य यूनो दर्शनादेवैवं ताम्यति । निन्दति चन्द्रम् ।

---

१ पद्मिनी कमलिनी स्त्रीजातिविशेषः । २ पुण्डरीकं कमलं मत्तविशेषश्च । ३ तदर्गप्रागतित्व पक्षे राका पौर्णिमा । ४ दोषाकरो रात्रिकरः दोषस्थानं च । ५ जीवस्य–प्राणिजातस्य–पक्षे जीवस्य गुरोर्वधूः स्त्री तारा । ६ स्त्रीग्रहणप्रवणनिपुणत्वं च ।

भवतु एवं भणामि तावत् । इत्यालोच्याह । भर्तृदारिके दिवा-
सूर्यकृतस्वपरिग्रहकुमुदिनीपीडनासहिष्णुतया निशि तत्परिग्रह-
कमलिनीं बाधते । तद्बाधनेपि कारणमस्ति । तदपि शृणु । अर्ध-
श्रवण एव तव मास्तु कोपः । तथा हि ।

तव कमलसदृशं नेत्रद्वयं । अब्जसुन्दरं मुखं । जलजद्वयः क-
ण्ठः । तामरसमनोज्ञो वर्णः । सारसानुकारि जघनम् । पु-
ष्करबन्धुर्मध्यदेशः । पुण्डरीकसमानं गमनं । पद्मोल्लासितं
सौन्दर्यम् । किं बहुना । पद्मिन्येव भवती खलु । अतो
ब्रवीम्ययं न विषमवर्ती किं तु स समवर्ती कोत्र दोषः
सुधाकरस्येति । एवं कथयन्त्यां शून्यहृदयं विहस्य तामेव
लक्षीकृत्य माह भर्तृदारिका । सखि मदनकलिके पूज्यमानम-
भिहितं त्वया यत्समवर्ती चन्द्र इति । यतः ।

क्लेशानुभावं क्षीणोपि पूर्णोपि च न मुञ्चति ।
अतः सखि त्वया चन्द्रः समवर्तीति गीयते ॥

सखि इदमेकं विस्मृतं त्वया येन महानुपयोगस्तवेति स्मार्यते ।

मधुमाधवयोस्तुल्यः श्रीपुत्रः पुष्पसायकः ।
समवर्ती कुतः सोपि न भवेन्नीरजानने ॥

सखि ज्ञातमिदानीं यच्चन्द्रादयः सर्वेप्येकमतेन चलन्ति त-
दुक्तमेव यत्सर्वेपि शनिस्वभावा एव । छायानन्दनश्चन्द्रः वा पु-
र्मन्दः वसन्तस्तु जातितः कालः मदनश्च गुणतः कालः ।
कोकिलगणश्च वर्णतः कालः । आस्तेतत् । पदमिदमेक-

१ अब्जजःशम्भुः । २ कमलं हस्ती च । ३ असितं कुटलं च ।

मेव विस्मयकरं चेतसः । यत्त्वममन्दगुणापि तेष्वेव मिलितेति तत्तुष्टोयं जनो धन्यश्चेति ।

तदनन्तरमस्मच्चम्पकवल्ली मा कोपय भर्तृदारिकां दूनेयं दुरात्मना कुसुमधन्वना सुधाकरेण च तदलमेतादृशवचनाभ्यासेनेति मदनकलिकां निर्भर्त्स्य अवदद्राजपुत्रीं । भर्तृदारिके किमिति विषीदसि । एतेषामुपद्रवापनोदायास्ति कश्चित् सुलभोपायः । तच्छृणु ।

कदाचिद्वनरमायाः प्रथमर्तुमहोत्सवसमये कासिमाश्विल्लतामण्डपे मिलिताः सर्वे समासदः । तदाग्रत्वपूजार्हः क इति प्रस्तायां विचिकित्सायाम् । कलावत्तया स्वयमिति चन्द्रः मरुत्कुलं विश्वमान्यमिति वसन्तवायुः स्वात्मानं बहु मेने । तदा तु तयोर्विवादमाकर्ण्य भूपे स्वयमेव मदने एकः कलङ्की द्वितीयो मन्दः कृष्णोयं कलकण्ठः पूजनीय इति वदति सत्यमाज्ञापयति महाराजः तत्पुरा राजसुयज्ञ एव निर्णयो जातः (कृष्णः) अग्रपूजार्ह इति वसन्तेन भणितम् । पञ्चरीकैरनुमोदितम् । अशोकेनाङ्गीकृतं । रसालेन च श्लाघितम् । ततः प्रभृति चन्द्रादयः परस्परं सामान्यरूपा इव तिष्ठन्तीति श्रुतं मया । तदद्य भेदोपायेनैव दैवाज्जातस्तेषामन्तःकलहो दृढीकरणीय इति । तच्छ्रुत्वा चमत्कृता स्मरशरदवमहारवेपमानहृदयापि वसनाञ्चलेन नृसिंहपुरीमिव सम्बर्द्धनीरां प्रभातनेत्राम्बिकाकुलाकुलतारां लोचनयुगुलीमुन्मृज्य साकूतेषत्सादरपुरीणे साक्षुपूरिणक्त-

१ नीरा इति नदी नाम सा नृसिंहपुरीमनुवर्तते । नीरसहर्क्षं च ।

व्यनिर्माणचतुरे साधु भणितामिति मुहुर्मुहुरभिनन्दनीयामभिवन्द्य-
हला त्वमेव वसन्तादीन् मद्वचनेनैवं कथयेत्याह । तथा हि ।

चन्द्रः कान्तोपि रोहिण्या वृषभो न न गौ भवेत् ।
वसन्त एष सुरभिरथ किं तत्र ते रतिः ॥
मातुलहन्तुस्तनयो मदनस्त्वं तस्य मातुलश्चन्द्र ।
मा विश्वस हेतुगुणाः कार्ये किं न हि भवन्ति तारेश ॥
कुह्वाह्वानचणोयं पिकनिकरोहिं च पोषयति वायुः ।
तद्द्वितयाद्वयमुक्तस्त्वं सोम किमित्यये तयोर्मिलसि ॥
सर्वलोकजननीति विश्रुतां मां दहत्यविरतं खरैः करैः ।
आत्मभूरसि निवारयाशु तं मीनकेतन कुमुद्वतीसख ॥
अपसर चन्द्राद्दूरं कथयामि हितं समीर गिलति त्वाम् ।
एष भुजङ्गश्चन्द्रो मिथ्या चेत् पृच्छ भोस्ताराम् ॥

इत्युक्त्वा हञ्जे शृङ्गारमञ्जरि इत एहीति मामाहूय मत्स्कन्धा-
हितैकबाहुरितस्ततो हेमलतेव चलन्ती प्राह ।

दुरुच्छेदः प्रेमा क्वचिदपि पदार्थेषु रचितः
स वो यत्नाभूमिः प्रियसखि विधातर्यसुमुखे ।
शरारुः कामोयं शकलयति मर्माणि तिलशो
न यान्त्येते प्राणाः कथमपि दुराशानिगडिताः ॥

अपि शृङ्गारमञ्जरि एते मदनादयः न गुणसाध्याः किं तु द-
ण्ड्या एव । मदनं लक्षीकृत्य ।

रे मनोज कुलदीपकर त्वं[1] शापितोसि न चिरेण विधात्रा ।

---

1 मृगी आरथ।

यदिपतुस्तव जनित्रितयेष्टामाश्रितोसि वनितावचचेष्टाम् ॥

इति अथाहमचिन्तयम् । अये मदनहतकोयमतितरां पीडयति भर्तृदारिकां मद्वल्लसर्वस्वमयं सुधांशुस्त्वनेनोपायेन भर्तृदारिका कोपयित्वा शिक्षणीयः । यथायं स्वां भक्तिं भजिष्यतीति निश्चित्यावदम् । भर्तृदारिके अहं कथयामि चन्द्रवृत्तान्तम् । तथाहि ।

एष किल द्विजराजः परिकल्पितमध्वागमोऽतनुहुताशेन सद्वरं चक्रं संताप्यानेकमुमनःकदम्बसुकृतोपनतस्य तपस्यानन्तरं भाविप्रसादस्य भगवतो माधवस्य प्रेरणया कलितपरमामोदेन मन्दानुकूलेन वायुनानुगृहीतमुदंश उदयन्नेव रक्ताम्बरो बुधनन्दनो मृगकृत्तिकापरिग्रहो योगिजनोल्लासको वियोगदूनं जनमेनं स्वकरेण सन्ताप्योपदिशति परं पुरुषं भजेति । तदत्र किं चित्तविक्षेपेणेति । अथ सा वेलातीतकोपा आः दुरात्मा परपुरुषं भजेति मामुपदिशति किल तत्फलं सद्य एवानुभवतु चन्द्रहतकः तत्सम्बन्धान्मदनादपोपत्युक्त्वा विरहाकुलाभ्यां लोचनाभ्यां गलताश्रुजलेन क्षणादञ्जलिमापूर्य कन्दर्पादीन् कटाक्षीकृत्य धार्ममाणापि सखीकदम्बेनैवमाह । तथा हि ।

यदि जन्मनश्यति भगवतो नारदोक्तगुणकर्मरूपात्सदृढता-मण्डपे लज्जामन्यरतारमालोकिताचञ्चरयूनः अन्यस्मिन् पुरुषे यद्यहमनुरक्ता तत्सफलीभवतु मे सरस्वती ।

---

१ मध्यगाधम् पक्षे मधुकृतम् । २ विष्णुर्विनताय । ३ धीविष्णुः ।

त्वं रे याह्यतनुत्वमाशुगचयः पञ्चत्वमेतु क्षयं
सामन्तः शिशिरांशुकोऽप्यसुमनोभावं च पुष्पाकरः ।
मान्द्यं यातु मरुत्सुहृत्तव रतिं गृह्णातु सर्वं जग-
न्मच्छापान्मदनाहमस्मि निरतैकस्मिन्नसाधारणी ॥

इत्यभिधाय किञ्चिदालोच्य सर्वमपि सखीगणमभणत् । अयि सख्यः यद्येनामापदं निस्तीर्य जीवामि तर्हि वरमेव। अन्यथा यद्यवतरति दैवाद्युष्मल्लोचनपथं स शबरयुवा तदैवं वक्तव्यः ।

यद्वैरस्यं मयाप्तं न हि तत्त्वद्रागहेतुकं किं तु ।
गुरुजनलज्जामूलकमिति जानन् रमण मुञ्च मयि करुणाम्॥

इति कथयन्त्येव बाष्पाकुललोचने वयस्याकदम्बे विहाय प्रमदवनं प्रमदाजनं च मध्यप्प्रसादा प्रासादमारुह्य विहाय पर्यङ्कं पर्यङ्कस्थापितवामकूर्पराकरकमलाञ्चितवदना दक्षिणदृक्कोणेन किमपिकिमपि पश्यन्ती कनिष्ठिकानखशिखया बाष्पसलिलं दिशि दिशि किरन्ती क्षणंक्षणं परिचर्यापरायणेऽपि जने शून्यतरया चित्तवृत्त्या बाहुयुगवेष्टितजानुद्वयस्थापितमौलिः क्षणं दीनदीनां दृशं पार्श्वस्थितसखीवर्गे धीरं धीरं सञ्चारयन्ती तस्थौ । अत्रान्तरे कथंकथमपि ज्ञातवृत्तान्ता देवी धराकन्यका प्रासादं स्खलच्चरणविन्यासमागत्य किमिदंकिमिदमिति पप्रच्छ सखीवर्गम् ।

तदनु वैद्यैर्ज्वरोयामिति दृष्टिरितिस्म धात्र्या
पीडा शनेरिति वचो गणकैः प्रयुक्तम् ।

---

१ छन्दः । २ उपमाला ।

अत्रान्तरे सहचरीगणमपि ह्रासः
कन्यां त्रपा नृपसतीमथ संशयोऽपि ॥

अथ देवी धरा विचिकित्सातरङ्गितान्तरङ्गमापृच्छत् । हञ्जे किमेतत्सत्यं कथयेति । तत्र च व्यतिकरे सानुनयं पृच्छन्त्यां देव्यां कृतावहित्थास्वालीषु इदानीं किमेषा कथयति पापेति रहस्यभङ्गभिया दृशावां भर्तृदारिकायां सभिन्नायन्त्रणं मा भण शापितास्मत्प्राणैरिति सूचयन्त्यां मदनकलिकायां कथयकथयाविलम्बितमिति उत्सर्पितपूर्वकाये जल्पति जरद्धात्रीवर्गेऽहमेवमवदम् । देवि ह्यस्तने अस्माभिरियं भर्तृदारिकापुष्पापचयाय गता खलु वनवाटिकाम् । तत्र चित्तमात्रकुतूहलेनोच्चरलिता कस्मिंश्चित्किरातकुलभूषणे भूभृति सम्बद्धक्रीडानुरागासीत् । अकालोऽयमिति अकृतार्थैव यावद्भवनमायाति तावदस्या इयं दशा । तदानीम् ।

देहो मध्यसमच्छविः स्मितरुचिं धत्तेथ नासामणिः
कैश्यस्यानुकरोत्यमेयचरितानल्पानिधत्ते गुणान् ।
निश्वासश्च विजृम्भते प्रतिकलं बाष्पो यथा यौवनं
सन्तापस्तुलयत्यपारविभवं लावण्यवारानिधिम् ॥

देवि प्रथमं तावदस्याः करयुगुले तापमाकलय ।

यस्मिंस्तामरसभ्रमेण मिलितैर्भृङ्गैः पतङ्गायितं
संसृष्टैर्मणिबन्धकोरानिकरैः सम्पातिपत्राभितम् ।
केलीपुत्रिकयापि दिव्यसमयश्रीरामकान्तायितं
लेपार्थं कलितैश्च चन्दनरसैरामोदि धूपायितम् ॥

किं चैनम् । स्मारं ज्वरं कलय लोकविलक्षणं योयं पूर्णच-

---

१ मदनर्णात्र भवम् ।

न्द्रोदयाभियोगाद्वर्धते। जैवातृकदर्शनादपि जृम्भते। सेयं भर्तृदारिका स्तोकेन वायुनापि दूनेव भाति। कस्य चिद्दृग्दोषेणापि भवितव्यं यश्चास्मन्मन्त्राविषयः। आपि च। किमेतादीति विविच्य प्रष्टव्यम्। यस्यामवस्थायां वर्तते भर्तृदारिका सा किं देव्यानुज्ञायते। देव्येतदेव जानामि इतःपरं देवी प्रमाणमिति।

ततश्च सा सूक्ष्मज्ञा महादेवी क्षणमिव ध्यात्वा दीर्घमुष्णं च निश्वस्य किमप्यनुक्त्वा प्रययौ। महाराजोऽपि देवीद्वाराकलितवृत्तान्तैकदेशः मां इत एहि शृङ्गारमञ्जरीत्याहूय आज्ञापयामास। गच्छ तपोवनं यत्र भगवानुशनाः शीघ्रमेव मन्त्रपूतं जलमाहर येन तापशान्तिर्भवेद्वत्सायास्तदाहमन्तर्नियमितास्मिता किं भवति मन्त्रजलेन विद्याबलेन वा मुधैव मामायासयति देवो भर्तृदारिकामिव मदनदेवोऽपि भ्रान्त इव लक्ष्यत इति स्वगतमालोच्य प्रकाशं देवस्याज्ञाप्रमाणमित्युक्त्वा अनुष्ठितराजादेशा प्रतिनिवृत्तास्मि। वयस्य उक्तं वक्तव्यं यदीषदपि परिचयः सरलानां नान्तरं सहते। सखे मराळक चित्रमेतत्।

> स्वान्तं हिनस्ति मदनो मानभङ्गाय कल्पते।
> सोऽपि सौख्योन्नतेर्हेतू रागस्य विषमा गतिः॥

अस्त्वेतत्। ॥ सुकृती कोऽपि न जाने यस्तु तादृगुनगञ्जयज्ञमदनवैजयन्त्याः शृङ्गारसारसर्वस्वमञ्जूषायाः हृदयाकर्षीति अस्त्वेतदप्यनुमन्यस्व यथाभिमतगमनाय वेला भूयसी जाता किं

१ चन्द्रः। २ कस्मिता। ३ शुकः। ४ प्रीतेः।

त्वेतदपि ज्ञातुमिच्छामि को भवानिति विस्तरतस्तत्कथयेत्याभाष्य जोषमासीत्[1]।

मरालकोऽपि सखि शृणु मदीयवृत्तान्तं यावद्वक्तुमिच्छति तावदेव श्रीनिवासोऽपि।

नो नीता रतिमन्दिरं मणिमयं नो मञ्चमारोपिता
नो दष्टोधरपल्लवः कुचतटी स्पृष्टा न वा पाणिना।
न क्रोडेऽपि कृता न वा मृदुगिरा संभाषिता केवलं
दृष्टा चूतवने करोति विवशं चेतः कथं कुर्महे॥

भूयः कातरतामवाप हृदयं वस्त्वन्तरं नेक्षते
दृष्टिः कम्पमुपैति गात्रमयते धैर्यं निरालम्बताम्।
रागाग्निर्मलयानिलैरुपचितः स्मेनां दशां प्रापय-
त्यत्रानङ्गकलम्बको[2] हृदि गतः साक्षी न चान्यो जनः॥

इति वदन्नेव यदृच्छया तत्स्थानमगमत्। यत्र शृङ्गारमञ्जरी मरालकश्च। आगत्य च तां दृष्ट्वा दृष्टपूर्वतनयाज्ञातमरालाभिज्ञः तयापि सरभसमुत्थाय सम्यङ्मौलिदेशप्रसारितचेलाञ्चलया कथमत्र देवोऽपि इति सस्मेरमुखमञ्जलिं बद्ध्वा।

यः शूरान्वयसम्भवः करगतं चक्रं च यस्य प्रजा
लोके नाभिभवत्यमीति स च मे श्रीवत्सलक्ष्मा पतिः।
कान्तस्तत्र भवान् भवत्विति यया तप्तं तपोभिः पुरा
सा वै मङ्गलदेवता भवतु मे कामाय सोमानना॥

इत्यादिना सविनयमभिवन्दितदर्शनाश्रान्तितवान्। अहो अ-

---

१ तूष्णीम्। २ कलम्बो बाणः स्वार्थिकः।

पूर्वेयमाशिषां परिपाटी। यदस्मिन्श्लोके तत्र भवानिति शब्द-श्रवणेन किमप्यानन्दमेदुरितामिव चेतः प्रायः प्रकृतोपयुक्त एवालापोयं भवेत्। अथ वा तर्कागोचरा खलु नियतेर्भङ्गी।

अब्दानामयुते गते सुतजनीरक्षा च तेन कृतो-
रस्त्वेतद्धनुरैशमुग्रमभवद्भग्नं कथं तेन हि।
अस्त्वेतच्च दशाननं स हतवानाजौ तदप्यस्तु वा
तद्वार्तां नृपते वदन्नहि कथं वल्मीकजन्मा कविः॥

किं च।

भिन्नं मेलयति प्रमादगलितं ग्रथ्नाति नीतं पुनः
प्रत्यावर्तयति क्रमेण शिथिलं नव्यं तनोति क्षणात्।
दूरस्थं निकटीकरोत्यसुघटं चानीय पाणौ ददा-
त्याच्छिन्नं प्रकटीकरोति पुरतो दैवं प्रधानं यदि॥

इति विचिन्त्य च। अपि सखि दिष्ट्या दृष्टासि किं तु कुशलं ससखीकदम्बायाः युष्मद्भर्तृदारिकाया इत्यानन्दबाष्पस्थाने विरहसंतापजनिताश्रूणि कल्पयन्हारितालपीतांशुकाञ्चलेन प्रमृज्य शोणारविन्दद्रोहदक्षं नेत्रयुगुलम् सस्पृहं तामप्राक्षीत्। सापि लज्जामन्थरतारं विलोक्य कुशलमव्याहतं भर्तृदारिकायाः। यस्या भवादृशाश्रितोन्मथनहेतुः किंचायं विदितवेद्यः कुतः देवस्य प्रियसहचरो मरालक इत्यभिधाय कृततत्कालोचितालापेन तेन चाभिमतप्रयाणा गृहीतपारितोषिका अयमयं देव प्रयाणप्रणामाञ्जलिरिति परिवृत्यपरिवृत्य पश्यन्ती शनैर्जगाम। श्रीनिवासोपि मरालकवचनदृढीकृतधृतिः फणीन्द्राचलमागत्य बकुलमालां नारायणपुरं प्रेषयितुमिच्छन्।

मधुरवचनरीतिं मञ्जुसत्संविधानां
कथमपि निजकार्यस्यानुकूलां विधाय ।
कविरिव विधिनार्यां वेङ्कटेशः प्रसाद्य
प्रभुरपि वकुलां तां श्रीनिवासो ननन्द ॥

इति श्रीमत्कवीन्द्रवर्यश्रीवेङ्कटाध्वरिकविराजकृतौ श्रीनिवासविलासाख्यचम्प्वां तृतीयोच्छ्वासः ॥ ३ ॥

—०:०—

## चतुर्थोच्छ्वासः ।

अथ परेद्युः श्रीनिवासाज्ञया नारायणपुरं गच्छन्ती वकुला मध्येमार्गमनर्गलप्रसरद्यशसं भगवन्तं महर्षिं निरीक्ष्य प्रणम्य च यथावृत्तं निवेदयामास । महर्षे त्वन्मोक्त विष्णुरात विदितमेव भवता भवतापहारकः श्रीनिवासो भुजङ्गाचले निवसतीति । स च कदाचिन्मृगयापरावृत्तो मामभणत् । अयि वकुले अद्य मया विपिनभुवि भ्रमता पद्मसरसो नातिदूरे कापि पिकालापा दृष्टा स्पृष्टा च मनसा । या खलु हीनमहीनमपि कलयति वेण्या । तनुमतनुं चोल्लासयति दृष्ट्या । अगं च नागं लज्जयति कुचाभ्यां । गजमगजं च द्वेषयति गत्या रतिमरतिं तिरयति रूपेण किं बहुना ।

वक्त्रं पुष्करहारि हारमरलस्वन्नेत्रं वियोगो विषं
बिम्बोष्ठोमृतमुन्दरः शरशतं ते ते कटाक्षाङ्कुराः ।

१ मारदम् । २ वीक्षितमञ्जुलता ।

क्षीरं वाग्भुवनोत्तरं वपुरये यस्याः कुचः सद्रसः
प्रेमाजीवनमेव तद्दिगुमुखी सा सानुनीत्युज्ज्वला ॥

मम खलु दर्शनात्प्रभृति चन्द्ररेखेव सागरस्य कामपि विकृतिमापादितवति चेतसः । तदग्रे भवती भवती नियतिश्च शरणमिति अहं समुक्तवती यद्गुम्फितमार्यभावस्य । तथा हि ।

देव परिहरेमां मनीषां यतस्त्वादृशानां पार्थिवानां नोचितः पराभवप्रकारो मन्मथेन । तोषहेतुर्धरणी न तरुणी । महत्त्वं दर्पेण न कन्दर्पेण । अङ्गीकुरु सैन्यं न दैन्यं । सम्पादनीयाः केशा न क्लेशाः । के वा चिरन्तनाः स्त्रीमूलकव्यसनेन न लघुतां नीताः । दैत्यादिरपि राक्षसविधिमङ्गीचकार भगवान् गोविन्दः । विना चन्द्रं को वा बुधनन्दनो जातः । मधुपाः कुसुमेषु सक्ता भवन्ति मदनासक्तास्तमोविशन्तीति त्वयाप्युक्तमेव किं तन्मृषा । माररहितो निश्रीक एव अपि चेदमपि शृणु या भवतोक्ता सा प्रायेण वियद्भूपालसुता भवेत् ।

जानामि तां यस्या मधुपकुलसुलभपक्षचतुरा कुन्तलाली । भुजङ्गस्पृहणीया वेणी दोषाकरानुकारि मुखं परपुष्टब्रह्मचारी ध्वनिः पल्लवैकासिकायोग्योधरः । द्विजिह्वसहचारिणी रोमलता मातङ्गानुकूलं गमनं सत्येव शुद्धो भवान् कथं तस्यां सक्तः । अस्तु वा तस्यां प्रणयः विरुद्धचर्ययोः कथं परिणामरमणीयता ।

तदपि शृणु संक्षेपतः । मा दिशो रञ्जयति त्वं पुनररञ्जयन् । सा दशा रङ्कुरुद्वेगिणी त्वमरङ्कुरुद्वेषी । सा पुनरलङ्कारातिसुन्दरी त्वं तु लङ्कारातिसुन्दरः । इति अतःपरं यथारुचि समाचरेति । सोपि श्रुतमद्वचनः स्मितं हसन् देवि शब्दसामर्थ्यात् गुणान् दोषीकर्तुं दोषानपि गुणीकर्तुं समर्थासि । अतोऽसामान्या तव

शक्तिः। किमप्युदर्कं श्लेषभाषणरसिकानाम् । प्रसीदतु वत्से मयि निर्व्याजप्रेममांसलं नवनीतकोमलं ते चेतः । कश्चित् पुरुषः स्वशत्रुमपि विवाहशोभया योजयन् महतीं कीर्तिं प्राप्नोति । अतो मां कृतार्थं विधाय परां समाख्यामवाप्नुहीति साञ्जलिबन्धमभणत्। महर्षे किं करोमि किङ्करी तदाज्ञाप्रमाणमित्यवतीर्य पवनाशनाचलात् प्राप्य कपिलेश्वरम् ।

गुणवद्गुणोप्यहीनो मार्गणवन्मार्गणोपि लक्ष्मीवान् ।
धर्मो धर्मवदचलो यस्य स पायात् पुरारातिः ॥

इत्यार्थयोल्लसन्महाश्लेषया गौर्यैवापरया नन्दयन्ती तमुमानायकमिह प्राप्तास्मि । बादरायणे इदमपरमभिहितं देवेन बकुले यदत्र कन्यासंबन्धिनामनुयोगः प्रसरेत्तदा किं कथयसि ।

अद्याप्यकृतविवाह इति कालातिक्रान्तदोषसूचनम् । भातविवाहोयमिति सपत्नीस्थितिज्ञापनम् । तस्यामलब्धसन्तान इति अपुंस्त्वव्यञ्जनं । द्वितीयो विवाह इति अमङ्गल्योद्बोधनं । भार्यास्य विप्रकृष्टा वर्तत इति गृहच्छिद्रावेदनलाघवम् । सा दुश्चरित्रेति अलीकवादमहापापकम् । नैकया तुष्यतीत्यव्यवस्थाद्योतनम्। रूपोन्मादित इति वनितापूर्वकानुरागाभावकथनम् । तया प्रलोभितोयमिति कुमारीजनविरुद्धशङ्काबीजोद्भवनम् । अभिनववया इति पापीयसा निष्कारणपरोपतापदक्षेण नारदेन भिद्यते रहस्यं पुराणपुरुष इति । अग चतुरासि वक्तुं किमपि वा वद कथमपि वा कुरु अप्रभुरस्मि युक्तायुक्तपरिज्ञाने । इत्येवं मय्येवार्पितभरे देवे मयाद्य किं कर्तुं शक्यामित्येवमुक्ता वि-

रराम। संवृतवचनायां तस्यां शुकोपि स्मारितश्रीनिवासः पुलकाङ्कितततनुः शनैस्तां बभाषे । देवि बकुले कुशलासि वक्तुं यदत्यक्तकार्यभावया देवस्य चित्ताराधनं कृतं । अनुसरणीयाः खलु निर्गलप्रचाराः प्रभवः ।

अस्त्वेतत्तावुभावपि दृष्टपूर्वौ तयोर्योग्य एव संयोगः । यतः सा श्यामा स तु कृष्णः सा पद्मिनी स तु वैसुमान् । सा कान्तालका स तु राजराजश्च सा रूपेण हरिणी स तु यशसा हरिणश्च । इति तथापि सा सुभद्राकृतिरिति दोलाकर्म करोति चेतः।

आः किमस्ति अगम्यागमनशङ्का भूपानां । रामो जनकसुतायामनुरक्तः विचित्रवीर्यस्तु अम्बिकामुमयेमे नदीसुतो वाहिनीपतित्वमाप राजनीतिं धिगज्ञातधिक्कारक्षमलोचने इलायामनुरक्तोभूदिलापुत्रः पुरुरवाः १ इति ।

अथ वा महत्सु दोषारोपणमेव दोषः । यथा कथञ्चित्प्राज्ञेन कृतोपयमसाहाय्येन भवितव्यमित्यार्यवादः । लोकेपि शम्बुरप्युपयमं नीत्वा महाराजसम्पदमनुभवति । तिष्ठत्वेतत् देवि साधय साधनीयं अहमपि यथाशक्ति श्रीनिवासस्य कार्यैकदेशसाधको भवामीति । वकुलापि श्रुततद्वचना निर्गत्य तदाश्रमात् ।

*चित्रं स्मृतिपथं प्राप्ते यस्मिन्निष्कण्टका मही ।*
*तं श्रीनिवासं संस्मृत्य पच्छुकोभूत्सकण्टकः ॥*

इति सानन्दं चिन्तयन्ती कतिचित् पन्थानमतीत्य राजपुत्र्याः शरीरतापापनोदाय द्विजजनक्रियमाणरुद्राभिषेकं सुवर्णमुखरीतीरस्थमगस्त्येश्वरमासाद्य ।

---

१ पुरुः विष्णुनाम च ।

सा वै पीनपयोधरा स च पुनः श्रीनीलकण्ठोभवत्
स्थाणुत्वं प्रकटीचकार स च सापर्णाभिधानं गता ।
तौ जातौ कलधौतकान्तिरुचिरा वा चन्द्रमातारकं
तद्दाम्पत्यमहो जयत्यनुकलं श्रीपार्वतीशर्वयोः ॥

इति स्तुत्वा द्विजपरिचर्यापरैः राजदासीजनैः समं तत्पुराभिमुखीबभूव । इतः श्रीनिवासस्तु चपलत्वभावो मरालकमाह । वयस्य वकुला तावद्गता परं कार्यं साधयति वा न वा । प्रायो मुग्धाङ्गनानां चित्तं राजप्रसादवच्चपलं । तत्र मन्दाक्षभूयिष्ठे किरातवन इव मृगो भीतभीतः प्रसरति मदनस्तत्र किंकरणीयमिति । सोप्याह देव मैवं । यतः प्रायशो लोके वनितानां स्पृहास्थानं सौन्दर्यमैश्वर्यं च विद्या च तत्रोदाहरणंताराद्वयं कलयतु देवः। तत्रैका तारा शृङ्गारदीक्षितत्वं राजत्वं कलानिधित्वं चन्द्रे दृष्ट्वा स्पृहयाम्बभूव । द्वितीया तु सुग्रीवं गजादियुक्तं कलालापेन तोषयन्तं कपिराजमकामयत् । देवेदं तावत्स्वैरिणीवृत्तं । का वा कुलकन्या एकत्र प्रकटितानुरागाभूत्वाऽपरत्र सक्तमानसाभवत् । अयि रुक्मिणीजाने किमत्र शङ्कया । तस्माद्गुणाने वसन्तश्रीनियतिश्च मेलयति देव्या सोप्यचिरादेव महोत्सवो विश्वं विस्मापयतीति ।

अथ देवोप्यचिन्तयत् । लोके पुरुषैः केवलं सेरलो न स्यात् । सरलसच्छोभः कुचभारः पीडयते । नवनवकपटोच्छ्रितो

---

१ स्थिरत्वम् । २ पर्णाभिधानम् पर्णनाम । अपर्णा पार्वतीनाम । ३ स्वतन्त्रधिया आचरणम् । ४ पुन्नाग । ५ देवदारू ।

मान्यो भवति वक्र एव गुरुरिति सद्वृत्तशास्त्रं । भगवान्नारायणोपि महामायायुक्त एव पुरुषोत्तमो जातः अतः कपट एव सर्वार्थसाधक इति विचिन्त्य ।

भारतसमरभूमिरिव गुल्मोद्भासिनी । वर्षासरिदिव मध्यदेशोल्लसत्पोता विन्ध्याटवीव वेत्रलतावती । शम्भुमूर्तिरिव कपर्दकमालालंकृता प्रावृट्लक्ष्मीरिव व्यालम्बिपयोधरा । धर्मदेवताभूत्वा नारायणपुरं प्रविश्य निशि पौरविलासं ददर्श । तत्र कश्चिद्विलासी कांचनास्त्रियं वक्ति ।

नीलाम्बराक्षि वामोरु मुसलं च करे तव ।
योग्या तवास्तु रामाख्या तनुयुद्धं भजाधुना ॥

इति । अपरः कस्याश्चन वृत्तान्तं सस्मार्य मत्याह ।

ज्यावल्लीलुलिता शिवस्य मलिनं चक्रं नखाङ्कोल्लसत्कोदण्डं मुकुलीबभूव च शरस्याद्यावतारक्रमः ।
आयस्ता सुमवाटिकाशिथिलितप्रायांशुकस्यन्दनः
प्रायेणाब्जमुखी सखेरिपुरणश्रान्तेव संलक्ष्यते ॥

काश्चिदपरा मुग्धावस्थामारभ्य क्रमेण रूढयौवनां कामुकीं वर्णयति ।

यत् पुष्पेषु शिलीमुखावृतिरभूत् सौरभ्यमासीत्ततः
पुष्पं चोत्कालिका च पल्लवकुले सारक्तता ते ततः ।
पश्चात्सद्विटपालिवेष्टनाविधिः पश्चाद्रसापेक्षता
यस्यास्तद्विरला लता विजयते सा कापि नेत्रोत्सवः ॥

---

१ गुल्मानि स्त्राः वामकुक्षिस्थमांसपिण्ड विशेषाश्च । २ पक्षी नीचश्च ।

इति । काचिद्वनिता यैरेवाक्षरैः स्वपुरुषः संछपयति तैरेवाक्षरैः प्रतिवक्ति । वीराथि ते नैपुण्यं दर्शय । मे खल्वाभियोगी न मुग्धाय । रामाधिकस्वभावाद्-हृदयङ्गमथीरासि । सरलता ते लोकोत्तरा । सन्माल्लानुगुणनायकगुणोल्लासितसम्पन् । अधरकृतमकरन्दबन्धुजीव-रुचिरासि । सर्वदोरुसम्पदा मनोहरासि । रुच्यातिरेकान्मामथः करोषि । त्वद्वृत्याविस्मयान्वितं मे चेतः । इति ।

कश्चित्स्त्रियं स्तुवन्निदन्ति मुग्धे सुप्रियासि । अननुकूलहप्रि-येतिरमणीयासि । च्युतमाने किं बहुभाषणैः । इति ।

काचिद्विटं स्तुवन्ती धिक्कुर्वन्ती स्वसुतां शिक्षयति । गराद्विटपा मुग्धे मनोजातविकारमेतास्मिन् मा कुरु श्रीवानेन सह जल्पन्त्या-स्तव स्नेहक्षय एव स्यात् । यथा निशान्तं न याति तथा कुरु अचिरादेव यमुनामागच्छति यश्च हितनरः पद्मिनीनां ततः पर-मनेन किं ते प्रयोजनमिति । काचिद्वेश्या गृहकृत्यनिवेदनव्या-जाद्दुहितरं शिक्षयति । अनर्घ्यमणिताम्रिज्ञि कण्ठस्थं स्नेहकृतं ना-यकं सत्कुरु न बन्धनं प्राप्नोति सुराभिश्च तत्र पश्यति । कुतः दुर्व-रसे प्रवृत्तिं मानीहि । क्व गता गुणाः न पात्रे ते प्रणय इति । काचित् सखी चतुरङ्गलीलानिवेदनव्याजेन जारं बोधयति । प्रि-यसख नन्वस्याः कुञ्जरं गृहाण । स्मरनवोनिष्कृतचातुर्यं अस्याः पश्य पश्य सेनामेनां त्वान्निकटगां । प्रकटीकुरु रथं पात्रं मा त्यज योजय बन्धे इति । एवमन्यत्रान्तरे ।

---

१ तैरेः मिमत्वर । २ रात्रौ गृहं प्राति च । ३ यमुमान् सूर्यः । द्भ्यवांध। ४ कमलानां पीनां च । ५ स्मरस्य मदनस्य यमरं आजि नाम युद्धं तत्कृत चातुर्यं । पक्षे स्मर इति पृथक्छेदः । ६ सेनां पत्तिसहितम् ।

लसमानसप्तपत्रा गलितघनध्वान्तनिकररमणीया ।
शरदः प्रभातवेला बभार लीलां झटित्येव ॥

अथोदिते सूर्ये । तत्र तत्र कालत्रयवृत्तान्तं कथयन्ती राजभवनवीथिकां प्रविश्य तत्रापि जनकदम्बवेष्टिता धर्मदेवता तत्तद्वृत्तान्तं कथयति स्म । तथाहि ।

कामपि वेश्यां प्रति । पूर्वेद्युर्द्वारोपान्त एव कश्चिद्भुजङ्गो दृष्टः स त्वया मन्त्रबलाद्बन्धे निवेशितः । कंचन विप्रंप्रति । अये त्वया रात्रौ रामाराधनं कृतं इदानीं बहुधान्यालाभचिन्तया म्लानमुखोसि पुण्डरीकनयनाराधनं कुरु फलवान् भवति ते मनोरथ इति । कंचन वणिजं प्रति । रात्रौ त्वया नीवी मोचिता । इदानीमपि मधुराधरागमनं चिन्तयसि सत्यानृतवृत्त्या ते कार्यसिद्धिः । दुर्गतं प्रति । ग्रीष्मे वसूल्लासं पश्यसि । अवरं प्रति । सूर्येस्तमिते श्यामालाभो भवति । अन्यं प्रति मध्याह्ने मित्रं स्वच्छमवगच्छसि । अन्यं पौर्णमास्यां प्रथमं राजानं द्रक्ष्यसि । विटं कावेरी ते दुःखमपनुदति । अन्यं शरदि धात्रीदर्शनं भवति । अन्यां इन्द्रं प्रार्थय सन्तानलाभो भवति । मन्दपुत्रां प्रति वसन्ते तवाङ्गजः प्रौढो भवति । इत्येवं जातमात्रं विश्वासपात्रमापादयन्ती समयेयं कालत्रयवृत्तान्तमात्रकथन इति स्तूयमाना राजवल्लभयापि धरया चेटीमुखेनाकारिता राजभवन मासाद्य देव्या दृष्टा क्षुधितास्म्यन्नं देहि ततः परं सर्वमपि ब्रवीमीति तज्जातिचापलं मध्येमध्येऽभिनयन्ती । श्रीबदरीनारायण मल्लिका-

१ निरर्गलासम् दन्योल्लासं च । २ सूर्ये स्निग्धम् ।

जेन वैद्यनाथ श्रीरङ्गेशविरूपाक्ष वीरभद्रनजुण्ड(?) गोकर्णलि-ङ्गेति देवताः प्रार्थयन्ती यष्टिकां चालयन्ती रुदन्तं शिशुं ताडयन्ती अयि राजदास्यः इयं राजाङ्गना यदुद्दिश्य पृच्छति सा विपदङ्गनातानुबन्धिनी महिष्या वृत्तमिदं । किमये न पुराभिवृत्तान्त एषः किं तूष्णीं तिष्ठथ सत्यमसत्यं वेति मुहुर्मुहुस्त्रासयन्ती अयि राजाङ्गने ज्ञातमिदानीं इयमनङ्गपीडा विस्तरेण वक्तुं नावसरः ।

प्रकृतमनुसरामि। तदाकर्ण्य भूतवृत्तान्तं इत्यकथयत्। तत्रान्तरे देवी सभयं । अयि धर्मदेवते किं मत्पुत्र्याः पिशाचबाधेति भणसि किं सत्यमसत्यमित्याह । सापि मूढे माभूवं अवधारयेति वदामि । न पिशाचपीडेति । इयं किल वसन्ते कस्मिंश्चिद्वनप्रदेशे कंचन निर्जरं निर्जरपुण्डरीकगर्वहारिनेत्रं नेत्रप्रभानिर्जितचन्द्रं चन्द्रकुलावतंसं तं संमानितं पद्मासनादिभिः अर्जुनवर्णेन घोटकेन यसनेन च विराजमानं राजमानहरेण वक्रेण भुजेन च शोभमानं शिशमिव सवलयकरं कमपि निपादचक्रवर्तिनमद्राक्षीत् । तत्र चाभिनिविष्टेयं कष्टां दशामवाप । तत्सत्यमसत्यं वेति विचारय ।

शृणु राजाङ्गने वर्तमानमपि । याचकजनतेव कामाभिभूता । चम्पकलतेवालिवर्गं न मुरयति । बौद्धचित्तवृत्तिरिव प्रमुनालोकनिस्पृहा । अशूरततिरिव शिलीमुखाङ्कीता॥ शम्भुभृत्यश्रेणीव सर्वदापि कात्युद्विग्ना । पतिव्रतेव पाञ्चतल्पं । नानुमोदते । केवलं तापीव तपतीयं ।

अयि भूपकुटुम्बिनि भविष्यमपि शृणु । अत्रासौ बा

१ आतपृतं निशापृतं वा ।

तच्छ्वरसूनो धात्री बकुलाभिधाना आगच्छति कन्यार्थिनी । सा यदि कृतकृत्या तर्हीयं सत्काविवत् जीवति । दर्पणवत्स्वमावमवलम्बते । पार्वतीव कुलाचलख्याति प्रथयति । कमलपङ्क्तिरिव श्रीनिवासयोग्या भूत्वा वीरतातिरिव अतनुजनन्यानन्दं तनोति ।

देवि कथितं कथनीयं । इतः परं स्थातुं न शक्यते दुष्टा मे सपत्नी शिशुरपि नाभिजातः । तदनु मन्यस्व यामि यथागतामिति । एवमुक्त्वा गते कुहनाधर्मदेवतास्वरूपे श्रीनिवासे धरादेव्यामपि सत्यमाह धर्मदेवतापुण्यसमयः पुण्यसमयश्च नर्तयति बालाजनमानसं कमलाशुगश्च दुःसह एव । भवतु सा बकुलाभिधाना पश्यामि तावत् यदि तदागमनमनलीकं तर्हि धर्मदेवतोक्तमनुष्ठेयमेवेति चिन्तयन्त्यां परेद्युः प्रातरेव यथोक्तपरिवारा सागतैव बकुलमाला । तदनु राज्ञी सेयमेवेति विज्ञाय सानन्दं पीनपयोधराभ्यां तदुरस्थलमाच्छादयन्ती कुचोन्नत्यालिङ्गनापर्याप्तहस्तनिर्मातारि कृतकोपाविष्करणा धातरि महाराजयोग्योपचारैः सत्कृत्य भवनं प्रापय्यागमनकारणमपृच्छत् ।

साप्यवदत् । देवि धरे शृणु मदागमनकारणं । यस्य वाणी स्नुषा सत्यपूता च कामरतनयः सत्यश्च सुग्रीवो देहः अश्वश्च । अञ्जनमपहसति पदश्रीः नखश्रेणी च । भूरिशोभावहं वस्त्रं सौन्दर्यं च । सारसानुकारी नेत्रयुगुलं वक्त्रं च । यस्मिन् राजनि द्वारकायां सुगृहस्य मणिबंधः सदानस्य गजस्य

---

१ लक्ष्मीवासस्थानयोग्या श्रीनिवासो वेङ्कटेशः । २ नाभिजातो मत्ता पक्षे न आभिजात इति च्छेदः । ३ सुग्रीवो यस्मिन् । अश्वनाम च ।

मदः सुवंशस्य वेणोः कण्टकाक्रान्तिः शूरजातस्य शनेर्मन्दता सुस्निग्धानां वनितानां मानहानिः सुवचसां शुकानां पञ्जरबन्धः सरसानां नदीनामधोगतिः । तस्य भगवतः श्रीनिवासस्य दासी कन्यार्थिनी प्राप्तास्मि ॥

इति तदुक्तमाकर्ण्य सन्तोषनिर्भरा देवी राजानं शुद्धान्तमाहूय शुद्धान्तरा धर्मदेवतागदितं वकुलागमनं रूपविस्मापितमणिपुत्र्याः पुत्र्या दशां च निवेद्य विगलितधान्तरं चक्रे । सोपि सुरगुरुमानीय सभां विदितवृत्तान्तं चकार । स चाह वाचस्पतिः । वर्षावासरेणेव सर्वतो सुखपूर्णेन हर्षेण रे रे राजकुलकमलिनीराजहंस ।

कमला कमला यस्य तार्क्ष्यस्तार्क्ष्यो धरापते ।
नन्दिनी नन्दिनी यस्य स ते राजन् वरो वरः ॥

यत्कीर्तिर्हसितं मुखे कुचतटे मुक्तासरश्चन्दनं
फाले सतिलकं सिताञ्जनकालिकोत्तंसस्तथा कर्णयोः ।
हस्ते हीरककङ्कणं सुधवलं वस्त्रं नितम्बस्थले
पादे राजतहंसको जयति सा दिक्पङ्कजाक्षी ततेः ॥

किं च मत्स्यइव सदा वनविहाररसिकः कूर्मइवोद्धृतनैकद्गोत्रः वराहइव क्षमान्वितः पुराणनारसिंहइव नृसिंहः वामनइवोऽभ्रमार्गणः भार्गवइव सहस्रबाहुगर्वहरः रामइवाचलोद्गतिभूषितः कृष्णइव भद्रानन्ददायकः बुद्धइव नयज्ञमीतः कल्कीव

---

१ "आहूय" इत्यपि पाठः । २ वनमुदकमरण्यं च । ३ उद्धृतं चन्द्रस्य गोत्रं (चन्द्रवंशः) येन । पक्षे गोत्रा पृथ्वी । ४ नयज्ञीतः न । नीतिज्ञमीतः ।

सुकृतोद्भवनिदानम् । अथ बालमुपामेता स एव मत्स्यादिरित्यार्यवादः ।

भद्राख्यः प्रमदोज्वलश्च सततं यो राजहंसश्रिया
भ्राजिष्णुः सुकुमारतां समगमद्यो वै घनोल्लासितः ।
स श्रीमाञ्जयति प्रकाममसुरश्रेणीकृपाणी हरि-
र्गङ्गावद्गजगण्डवद्गगनवद्राङ्गेयवद्गेयवत् ॥

इति यावद्ददाति तावत्काश्चिद्राजमन्त्री बहुश्रुतो नाम कथयाम्बभूव । भो देवानेन सुरपुरोधसोक्तमाकर्णयता मयापि किंचित्स्मृतमिदानीं जानाम्यहं तं । स हि कृतदशावतार इति सत्यमेवं । तथाप्युक्तगुणान् न पश्यामि । तथाप्येनं मत्स्यावतारे नीरसंचरणचञ्चलं[1] प्राहुः कौर्म्येऽप्यवतारे धृतमन्दरागं[2] वाराहे कुभीतियुक्तं नारसिंहे कयाधुतनयानन्दित[3] इति वामनावतारे बलिविरोधिनैसमं[4] गत इति भार्गवावतारे अर्जुनद्विडिति रामावतारे शरभङ्गमवोपेति[5] । बौद्धावतारेऽहिंसानन्दं बभार । कल्क्यवतारे कलिसंस्कृतमध्यवती इति । अपि च राम एव कृष्ण इत्याचार्यो वक्ति तदपि विचार्यं । कृष्णो हल्यानन्दनः रामस्त्वहल्यानन्दनः[6] कथं जातः । देव शृणु कृष्णावतारकथामपि । पालितार्जुनोपि भग्नार्जुनश्चासौ[7] । किंच । बाललीलाचरित्रमपि

१ नीरं उदकं तस्य चरणे चञ्चलः । पक्षे नीरसं चरणं चञ्चलं च इंदः । २ धृतः मन्दः रागो येन । पक्षे धृतमन्दराचलम् । ३ कयाधुतनयः प्रह्लादः । पक्षे कया धृतीयानन्दम् । ४ बलिविरोधिना देवानां इनः इन्द्रः तस्य समा 'समाराभ्रे'ति नपुंसकत्वम् । तत् । ५ शरभङ्ग ऋषिम् । पक्षे बाणभङ्गम् । ६ हल्यानन्दनः अहल्यानन्दनः । ७ भग्नार्जुनो वृक्षः ।

तद्ग्रामगोचरमस्माकं। इतः परं देवः प्रमाणमित्युक्त्वा तूष्णीं स्थिते सस्मिते राजमन्त्रिणि। संदेहदोलारूढे भूपेऽपि देवाचार्यः कुपित इव हंहो राजवल्लभ बहुश्रुत प्रगल्भोऽसि श्लिष्टरचनायां देवेऽपि अस्पृष्टदोषगन्धे शब्दसामर्थ्यात्कलुषमारोपयसि। शृणु रे।

गङ्गा पादसरोजपुष्परसति व्यालाधिपस्तल्पति
त्रैलोक्यं च कुटुम्बति द्विरसनद्वेषी रथत्यण्डजः।
कालः दास्यति शासनत्यनुदिनं सा वेदवाणी गृह-
त्यब्धिर्यस्य रमानिवासरसिके तस्मिन् किंचिद्गुणाः॥

किं च। सत्यव्रतदयाशाली न किं मत्स्यः पृष्ठीकृतमन्दरागः कूर्मः वसुमत्यलंकृतो वराहः हिरण्यदानदक्षो नृसिंहः विक्रमप्रसिद्धो वामनः सहस्रकरविरोधिप्रतापप्रसरो भार्गवः धर्मदीक्षागुरू रामः सत्यान्वितः कृष्णः सर्वज्ञो बुद्धः सत्कृतमनकः कल्की। यस्मिन् रक्षति क्षितिं आपणेआपणे रोहिण्यः मण्डलेमण्डले राजानः पञ्जरेपञ्जरे शुकाः वनेवने इन्द्रद्रुमाः वीथ्यां वीथ्यां निर्मराः मुरतेमुरते इन्द्राण्यः बिलेबिले चक्रिणः अरण्येअरण्ये स्थाणवः। यस्मिन् सिन्धुराजनिग्रहोपायविदि दाशरथ्यभिन्ने श्रीकृष्णे देवे शबरत्वमपि न विस्मयाय। अन्यथा शबरी कथं तुष्येत्। तिष्ठत्वेतदस्मद्वचनं। पुराणाचार्यः शुकः प्रष्टव्य इति स्मृतिमात्रकृतसन्निधानः यथाविधि पूजितः कथयामास शुकयोगी राजन् अवहितो भव। पुरा खलु त्रेतायां श्रुत एव स्यात् पठ्यमानेषु पुण्यप्रबन्धेषु कश्चिद्रामो नाम राजा दाशरथिरयोध्याधीश इति। यस्मिन्राजनि सुनारातितुल्यरूपं चन्द्र-

इव ब्राह्मणगणो जैवातृकश्च सुमहितो वसन्त इव क्षत्रियचयः अशोकाङ्कितश्च । यस्य राष्ट्रे गिरिविभ्रमा गजा इव द्विजाः मदाद्विजा इव गजाश्च । सुप्रतीकस्पृहणीयाः करिण्य इव तरुण्यः सार्वभौमयोग्यास्तरुण्य इव करिण्यश्च । कलमहितावाणीव केदारश्रेणी बहुधान्यहृद्या केदारश्रेणीव वाणी ।

राक्षसविभवानन्दश्रवणं हि समासु चक्रवर्तित्वम् ।
राजन् कुलालनिचये यस्मिन् रक्षति वसुन्धरां राज्ञि ॥
स हि सस्युरागशोभं शैवशरा संकर च सीतायाः । -
चित्रं चित्रं युगपद्राजकदम्बं च पीडितं चक्रे ॥
अनुभूतचापभङ्गः पूर्वं पश्चाच्च दृष्टशरभङ्गः ।
बहुगुणभङ्गः सततं चित्रं चित्रं तथापि वीरोसौ ॥
स जयति कश्चिद्धन्वी वालिस्वर्मार्गगमननि श्रेणी ।
छिन्नसुसंधितताराताटङ्कश्रीः कृपावेणी ॥
आशुगजातहुताशनसात्कृतलङ्कापुरो तदीशो यः ।
सीतादर्शनकुतुकी सोव्यात्काकुत्स्थपुण्यपरिपाकः ॥
विरहाग्निः शान्तिमगात् प्रविशति वह्निं विदेहकुलरत्ने ।
न हि चित्रं सीतायामुष्णेनोष्णं प्रशान्तिमेति किल ॥

तदनु चित्रभानुप्रवेशनिर्गमपूता सीता आप्तराज्यं राममवादीत् आर्यपुत्र मायासीतेयमायाचिता दुरात्मना रावणहतकेन तादिदं भा-

---

१ सुप्रतीकः दिग्गजः पक्षे सुप्रतीकैः सुन्दरावयवैः स्पृहणीयाः । २ कलमधुरध्वनिः तेनमहिता वाणी । कलमानां धान्यानां हिता । ३ बहुधा अन्यदृष्ट्या हार्दं पक्षे छेदः । ४ मयानादु ।

र्थापदे स्थापनीयेति रामस्तत्तदाकर्ण्य। प्रिये जानकि एकपत्नीव्रतधरोऽहमिदानीं कृतकृष्णावतारस्तारेशमुखीमेनां मेनाङ्गजातामिव शिवो भूपसुतामङ्गीकरोमीत्यभाणीत् । राजन् सैवेयं पद्मावती स एव श्रीनिवासः । तयोरुचित एव संबन्धः कोऽत्र संदेहः किं विलम्बेन लिख्यतां लग्नपत्रिकेति । अथाकाशभूपतिस्तु लग्नपत्रं भगवन्तं भागवतमसवस्पर्शी शुकं बकुलया सह प्रेषयितुमिच्छन् कुमारीमासादस्थितां बकुलाम् ।

भटो गजः करो नीतिरपि वेङ्कटभूपतेः(?) ।
वासे सदा-भरसमा भाति तच्छत्रुवर्गवत् ॥
कान्ताफालकटाक्षासि रूपवद्राजते सदा ।
रोहिताङ्गाल्लसल्लक्ष्मीर्हेयानं शेषाचलप्रभोः ॥

इति श्रीनिवासगुणवर्णनचतुरं राजपुत्र्या सह संक्षेपन्तीमाहूय फणीन्द्राचलं प्रेषयामास । स च शुकोऽपि सपक्षस्तदहरेव प्राप्य यथाशास्त्रपूजितः ।

पद्मलश्रीर्मया दृष्टः श्रीनिवास तवाहितः ।
अक्षरच्युतियुक्तोऽपि तादृगेवेति विस्मयः ॥
स्वच्छत्राराति तन्नारी मता बिम्बाधिका प्रभो ।
यत्संत्यक्तकुन्तलका सा परित्यक्तकुन्तला ॥

इति सनयशब्दमुदीर्य ।

प्रतिपाद्य दुहितरं स्वां गङ्गां यथैव स्रवन्तीनाम् ।
भगृहे तदीयकन्यां लक्ष्मीं कृष्णः कलत्रार्थी ॥

इति बहुश्रुतश्लोकश्लोकवर्ज्यं सर्वमपि वृत्तं स्वागमनकारणं च

निवेद्य तोषयामास । स्थाने खल्वेतत् । न कस्य शुकवाणी तोषहेतुः । पुनश्च शुकः श्रीनिवासमाह । देव सर्वमपि वृन्दारकवृन्दमाकार्य । अधुना तु सर्वत्र परिपूर्णवाहिनीकः समृद्धकमलः । उत्पूयमानहरिकदम्बः स्फुरच्चापः ज्योहितकरः शूरराजतेजोपहारकः हृतसारङ्गनिकरः महाराजइव वर्षासमयः समाजगाम । यश्चाब्जयोनिरिव सर्वसत्त्वाकरः संवर्तइव दृष्टानेकसद्योतप्रतापः । अनुकूलनायकइव सदाबलाकामाहितः । भारतरणइव दृष्टसिन्धुराजः । द्रुपदइव शिखण्डिनन्दनः । दुर्जनइव भिन्नसेतुः तालवनप्रदेशइव भग्नधेनुकः । त्वामिव संजातकीर्तिः आनन्दयति पार्वतीकटाक्षइव सर्वं । अपि चेदानीमसहमानतपःस्थितिविलासाः घनश्रीबद्धस्पृहाः मित्रस्य राज्ञोपि नानुग्राह्याः इति सूचयन्ताविव पुष्पवन्तौ । न नयनगोचरीभवतः द्रावयन्त इव शुचिचरित्रं मदनगुटिकाधनुर्मुक्ताः कुमुदकलिका इव पतन्ति करकाः । जीवनप्रदेष्वपि चपलाः चिरं संगतं न यान्तीति कथयन्त्य इव मेघेषु क्षणं राजन्ति सौदामन्यः । किं बहुना ।

राधोल्लासनिदानेन पक्षराड् दर्पहारिणा ।
अनेन हंसारिपुणा देवकीनन्दनायितम् ॥

देवातः कथयामि । जम्भशोभापहे सुमनःसंदोहसुन्दरे त्वयीव वर्षावासरे कृतवति दयां शरदि महोत्सवमनुभवतु देव इत्युक्त्वा च । तदनुमत्या स्वाश्रमं गतवति कपिसार्वभौमे शुके ।

१ पत्र पूर्णा । २ मदा–मदारा–मदिनः मदा–अबला–काम–हितः ।

बकुलाहस्तार्पितं पद्मावत्या वसन्तमिव सकलकण्ठशोभं ग्रीष्म-मिव शुचितारमणीयमितं वर्षावासरमिव पयोधरसुन्दरं शर-त्समयमिव राजचन्द्रगुणं हेमन्तमिव स्पृहणीयमित्रकरं शि-शिरमिव तपःस्थितिज्ञापकं मौक्तिकहारकण्ठालंकरणं विधाय कदा गच्छेच्छरदिति चिन्तयन् ।

नवरसकमनीये शीतशीतस्वभावे
लसति भुवनसारोज्जृम्भणे वेङ्कटेशः ।
कविरिव नृमृगेन्द्राचार्यवाचां विलासे
विहरति स च वर्षावासरे श्रीनिवासः ॥

इति श्रीमत्कवीन्द्रवर्यश्रीवेङ्कटाध्वरिकविराजकृतौ श्रीनि-वासविलासचम्प्वां चतुर्थोच्छ्वासः ॥ ४ ॥

—•:•—

## पञ्चम उच्छ्वास ।

अथ तस्यां वर्षावासरकलारमण्यां क्षीणप्रायं गतायां दृश्या-दृश्यगोपपयोधरां हंसकलसन्नीरजपदां स्फुटपरिकलितनिर्मलरवां निरवग्रहराकासम्पदभिरामाम् अच्छाच्छशुभ्रांशुकरमाप्रकटोपल-क्ष्यमाणनक्षत्रमालां अतनुबन्धुजीवानन्दकारणं रम्भोरुश्रियं दधा-नां शुकव्याहारमणीयां स्फूर्जच्चन्द्रशालिनिशाभिरामां ललितमृ-णालकुन्ताभूषितां शरदं साक्षादिव पद्मावतीं विलोक्य द्विगुणित-रणके श्रीनिवासे मरालकः पपाठ ।

१ अवग्रहो ग्रहणम् ।

वेणीगुम्फितकमलश्रेणी संसक्तचञ्चरीककुला ।
एणीदृगिवानन्दद्रोणी नैवास कस्य शरदेषा ॥
आमोदितकमलाशयमुद्बुद्धविधुप्रसादभूयिष्ठम् ।
श्रीकृष्णयोः सखीव नन्दतु देवः शरत्समयम् ॥

अथ तेन प्रथमरसासारगर्भितेन श्लोकद्वयेन चमत्कृतौ बलान्नीयमान इव मदनेन प्रयागमिव भारद्वाजसञ्चाररमणीयं त्वयशःसमूहमिव लसच्चन्द्रभासंकाशसौन्दर्यवहं स्कन्दमिवापहृतक्रौञ्चमदं पर्वतैकदेशमाश्रित्य मरालकमवादीद्देवः । वयस्य पश्य ।

चित्रवर्णसमुल्लासः सर्वद्विजकुलाग्रणीः ।
शुकः कूजति सानन्दं निखिलश्रुतिसौख्यदः ॥

इति श्रुत्वा मरालकोपि देव तिष्ठत्वेतच्छुककूजनम् । किमनेन अरुन्तुदेन देवस्य तच्छुककूजनं स्मरतु भवान् । यत्कन्दर्पकालसर्पदष्टस्य देवस्य पतगराजमन्त्र इति भणति सति साधुभणितं न यस्येति श्लाघयन् स्मृतिमात्रकृतसन्निधानौ अनन्ताभिधानौ द्वावपि उपसानित्याहूय शेषगरुडौ भवद्भ्यां गिरिस्तमेमामासः चतुर्मुखः शिवश्च सर्वामरगणैः सहागच्छेति वक्तव्य इत्याज्ञाप्य पत्रिकां च दत्वा प्रेषयामास । ततश्च ।

अमृतपनद्धाधिपतिः सपत्रो न तद्विचित्रं स यतो गरुत्मान् ।
चित्रं फणीन्द्रोपि तथेति यद्वा किं दुर्लभं तुष्यति वासुदेवे ॥

अथ ताभ्यामाकारिताः सर्वे सबुधा अपि विबुधाः भवेन

१ पक्षी फणिच । २ पक्षी ईश्वर । ३ द्विजाः पक्षिणो ब्राह्मणाश्च । ४ पत्राणि पर्णानि संदेशपत्रं च ।

विभवेन च राजमानाः मानयुक्ता विमानयुक्ताश्च फणीन्द्राचलम-गमन् देवाः । तदनु तानागतान् वीक्ष्य । देवैते शतानन्दकौशिकमित्राङ्गनशुक्रहरिप्रभृतयः सप्रमदाः सयमाः समृगकृत्तिकाश्लेषाः साषाढाः वैश्रवणतत्परा: देवा मुनयश्च समागताः । तत्रैते देवाः सकामा अप्यकामाः देवाः स्त्रियः साशिवा अप्यनुग्राः राशयः सतुला अप्यतुलाः ग्रहाः समूर्यमङ्गला अप्यमूर्यमङ्गलाः किं च एतौ हिमरानौ गरुडसुधांशू मरुन्नियन्तारौ वायुपुरन्दरौ नियमितनारौ गुरुसूर्यौ । शिखिख्यातौ स्कन्दवैश्वानरौ आत्मभुवौ मदनचतुर्मुखौ ।

अपि चान्ये केचन शिवाइव समङ्गलाः गाङ्गेयभूषिताश्च । अग्नय इव रोहिताश्वाः संहतयश्च । ब्राह्मण इव सत्यासक्ताः सुकुमाराश्च । गीर्वाणा इति विष्वक्सेनप्रदर्शितान् निरीक्ष्य सहर्षस्तमजीगदत् । सेनापते यथायोग्यमेनानवतारयेति । स तु देवेन पूर्वमेवापितास्तारिताश्चेति वदन्नेव निर्गत्य क्षणात् पुनः प्रविश्य व्यजिज्ञपत् । देव मदागमनात् पूर्वमेव सुमनोवाटिकायां स्थितः पुरन्दरः वरुणस्त्वाकाशगङ्गानिकट एव सानन्दः । धनदः पुष्पजनावासयोग्यं गिरिशिखरमेवाश्रितः । रम्भावने जागरूकस्तिष्ठति नलकूबरः । भानुः काञ्चनलतामिरामां छायामाश्रित्य क्रीडति । स्कन्दस्तु देवसेनां क्षणमपि न मुञ्चति परम्यः शङ्कमानः चन्द्रस्ताराेल्लासितमण्डपे निवसति । शिवः परितः पर्वतपुत्रं परिपालयन् वर्तते । मृत्युर्वेङ्कटभूपालवैरिषु स्थापितः मदनस्तु देवस्य

१ पक्षी नक्षत्रं च ।

निकट एव धृतशरचापो यामिकव्यापारासक्तः इति विदितमेव देवेन । देवान्यत्किंचिद्विज्ञाप्यमस्ति । इन्द्रस्त्वेहिहेतिवासुकिप्रभृतिः सर्पगणः बिभेति । वायुर्बहुघोक्तोऽपि नैकत्र तिष्ठति । वृश्चिकराशेः स्थलं न मिलति । पराशरः कन्याराशिनिकटं यथा न गच्छेत्तथा देवेन वक्तव्यः । स्कन्दवरुणौ वाहिनीपतित्वे प्राप्तकलहौ । अपि चायं वैश्वानरः अंशेन वैवाहिकानामुदरं प्रविश्य व्याकुलयति । तदत्र का गतिः इतः परं देवः प्रमाणमिति । देवेऽपि स्मेरवदने कृतं चतुरालापेन सर्वोऽपि जनः क्षुधातुर इति वद । कथय चतुराननं मद्वचसेत्याज्ञापयति विष्वक्सेनोक्तः परमेष्ठी कुबेरमवदत् । धनाधिपते देवः श्रीनिवास आज्ञापयति तावन्मीनिमेषकुम्भराशयो वर्तन्ते देवानाममृतं स्वामिसरासि पुरैव स्थापितं । काष्ठार्थं दिग्देवताः सन्त्येव । पयोर्थं मेघा आज्ञापिताः । अलंकृतयः कविनार्पिता एव । अन्यदाज्ञापनीयं भवति तस्माद्भवानेव शरणमिति तथास्त्विति तेनोक्ते । गृहीत्वा द्रव्यजातं तत्तद्योग्यं जनं तत्तद्व्यापारे नियोजयामास । तथा हि । कामदाने शङ्करं । सुरभिद्रव्यसाधने वसन्तं । आशुगमनागमनव्यापारे वायुं । चन्द्राम्बरमणिग्रहणमोक्षव्यापारे स्वर्भानुम् । वनिताजनसत्कारे मदनम् । अतनुदीपप्रबोधे चन्द्रम् । आर्याज्ञापालने स्कन्दम् । गीतादिश्रवणे वैश्रवणं । सर्वव्यापारेषु मङ्गलम् । इति ।

सभास्तारेषु भूतिविषु देवेषु च नरेषु च ।
प्रियं प्रियं विशेषेण यद्व्यासोऽभूत् प्रभारतेः ॥

१ भर्तृहरिप्रभृतः प्रबंध । २ मदी सेना च । ३ प्रभायां रतः भारतेन सहितः ।

ततश्चाष्टवर्गस्नानमाचरितुं प्रवृत्तस्तत्कालजातलक्ष्मीस्मृतिः अचिन्तयदेवः। लोके सपन्नत्वेन सपङ्कोपि कासारो भुवनाधारो भवति। सकमल एव चन्द्रो दोषाकरोपि सर्वज्ञचूडामणिख्यातिं लभते। सम एव सर्वैः श्लाघ्यते। सश्रीकः स्वयमधर्मपुरुषोपि चण्डीं वशवर्तिनीं कुरुते शिवः। इति। अत्रान्तरे विदितप्रभुभावः उष्णरश्मिः सार्थकयन् मित्रभावं प्राप्य करवीरपुरं। तत्र च क्षीरपारावारकन्यां।

भाषास्मरहयहेषा शेषाम्बुजलोचना शिरोभूषा।
शेषाहितल्पयोषा सैषा मय्यस्तुकलितपरितोषा॥

इति स्तुत्वा तयाप्यागमनकारणं किंमिति पृष्टस्तां बभाषे। देवि शृणु देवः श्रीनिवासः भुजङ्गराजशैले निवसतीति ज्ञातमेव खलु। स हि शरीरजातपीडया दूयमानमनाः काचनलताङ्गीं कमलां कमलपाणिमाश्लिष्य पूर्णकामो भवामीति त्वामाह। तदत्र शेषाचलगतया भवत्या भवितव्यमिति। अथ क्षणादेव करवीरपुरान्निर्गतयोः सूर्याभिधानरमणीययोः स्वच्छायाह्लादकयोः पुष्करोल्लासिकरयोः गगनमध्यास्थितिश्लाघयोः शेषाचलनिकटं भातयोस्तपनक्षीराब्धिकन्ययोः प्रथमागते दिनेशे श्रुतदृष्टतत्कार्यः देवागता देवीति विज्ञापयति तस्मिन् आश्लिष्य तमाह।

श्रवणोल्लासकृद्यन्मे ताराश्वासनतत्परः।
अनुभूतरसाश्लेषः सूर्य जैवातृको भव॥

इति। तदनन्तरं च मातां तदनुरूपदेहस्थितिः तया सह स्वा-

१ आयुष्मान् चन्द्रश्च।

मिसरस्तीरे क्षणमासीनः तां विगाक्षितवेद्यान्तरामकरोत् । तदा लक्ष्मीकरकमललापिततैलः पार्वत्या स्नानार्थमाहूतः स्नानपीठमारुरोह । तदा कश्चिदवसरपाठकः पपाठ ।

घनीभूतस्नेहैः प्रथममभिलिप्याब्जसदना
द्रवीभूतैर्लिप्तं तदनुरमणं सा कृतवती ।
हरिद्रस्थैः सुस्नातं सुरसनिकरैश्चित्रमधुना
कटाहस्थैः स्नातुं हिमगिरितनूजाह्वयति तम् ॥

तत्र काचन भीमसेनतनुरिवोत्क्षिप्तघटा काचिद्विन्ध्याटवीव महाकरीरा काचिद्गजपङ्क्तिरिव मदोदकधाराकलिता काचिच्चकोरीव निशोल्लासितचन्द्रजीवना काचित् त्रयीतनुवत् कुङ्कुमरुक्कमलोद्भासितकरा काचिद्विष्णुवत् पाणिधृतकमला देवं वनितोजनता स्नापयाम्बभूव ।

अथा कल्पादिभिरात्मानं धस्कृत्य शमी शमीमानाय रथारितनान्दिः नारायणपुराभिगमनमतिं चकार देवः । ततश्च सुशोभयोगनक्षत्रयुजि मुदितपद्मावतीहृद्भुजि मुदिताकाशभूभुजि दिवसे वामभागे वक्षेपु च लसता कलधौतवर्णेन सरस्वतीपंश्चकेन युक्तहंसयानः पुरतः । चन्द्रवर्णाविहीनमाली शिवावुत्तरतो गजेन्द्रगमनौ दक्षिणतः शचीपुरन्दरौ शरन्नातकीर्तिकलितौ वरुणस्कन्दपश्चिमतो यमतुः। अन्यापि यथायोग्यं निर्जरहृदयानन्दकन्दौ रतिमन्मथौ च ज्येष्ठापाढोज्ज्वलौ पुनर्वसूल्लसितौ सूर्यसुधाकरौ च

मदिष्टदायी नमदिष्टदायी रसानुकूलो नरसानुकूलः ।
एसारस्वरूपो निलसत्स्वरूपो मध्ये ययौ तार्क्ष्यरथः सलक्ष्मीः ।

---

१ शीतगतः । २ आलिङ्गतर्वपि । ३ मन-इष-० मनत्-इष-० । ४ मार्गो मानुकूलः । ५ अभिरिवमरूपः ।

एवं क्रमेण नगजाताभिरामं कतिचित्प्रस्थानमतीत्य नत्वा च कापिलेश्वरं कृष्णस्येव महासुवर्णमुखरीतिख्यातां शुकाभिधानां व्यक्तिं दृष्ट्वा नदीं च तीर्त्वा महाकल्पसदृशेन वैवाहिकजनेन केनचिद्दिवसेन च सामोदं प्राप्य नारायणपुरबाह्योद्यानपुष्पवाटिकाप्रदेशं दृष्ट्वा च वियद्भूमिपाले शान्ते चान्योन्यपटवासप्रक्षेपव्यापारे । व्यासस्येव पुराणागमख्यातस्य कृष्णस्येव महाविटपालिङ्काभ्यस्य मेरोरिव नगललामस्य मुकुटिन इव महाछायास्थितेः सुकलस्येव दृष्टप्रसवस्य समराङ्गणस्येवेतस्ततः पतच्छिलीमुखस्य सुरेश्वरस्येव सहस्रनेत्रस्य चैत्यरसालद्रुमस्यालवाले क्षणमासीनः पद्मावत्याः विरहविनोदनार्थं कल्पितं मन्दिरमध्युवास । तदनु मरालकस्तमुवाच ।

पाकस्थानं हिरण्यस्थलमथ च मधोरुत्सवस्थानमेत-
त्प्रह्लादस्थानमेतत् कविवसतिरियं शम्बरस्थानमेतत् ।
भात्येवं गेहमेतत्पुनरसुरमणीसात्कृतं तादृशं चा-
प्याश्चर्यं श्रीनिवासप्रभुवर विबुधोत्तंस ते मोदहेतुः ॥

किंचैषा देव्या वरायाः प्रसादभूमिः चेटी मल्लिका नामास्मन्मुखेन विज्ञापयति देवम् । भवत्संबन्धिनो वैवाहिका यथायोग्यं तत्तत्स्थानेषु स्थापिताः । तथाहि ।

मेषवृषभादयो गोष्ठे । मत्तद्वारिकाकण्ठ एव नक्षत्रमाला ॥ रम्भादयः प्रमदवने । कविबुधकलानिधयः सुधाधौतप्रासादेषु ।

---

१ नगजा पार्वती तयाऽभिरामम् । पक्षे नगजा नाम वृक्षाः । २ महान्तश्च ते सुवर्णाश्च तैः मुखरी वाग्मिनी । (' स्वप्रकरणे समुखकुञ्जेभ्य वचर्तस्थानम् ' गौणादित्यान्वयः ।) पक्षे सुवर्णमुखरीति प्रसिद्धं नदीनाम ।

सौधाग्रे केतुः । मन्दः सभाबहिर्देशे । भुजङ्गावली नरेन्द्रभवने । अन्ये सर्वेऽपि सुमनोगणा बाह्योपवने । अपि तु ।

धनुः शस्त्रशालायां प्रास्थाप्यमुद्याने वा । तारा आङ्गिरस्य निकटं प्रापणीया चन्द्रस्य वा । देवेन सह गतः सविता वसुदेवो वा सूर्यो वेति वेत्तुमिच्छामीति । देवेनाप्यनाकर्णितकेन कथय मरालक कदा त्रियामा विरमेत् ।

प्रहस्तपीडने योग्यो नूनं कुम्भप्रभाहरः ।
कुचाभोगः सरोजाक्ष्या हनुमानिव राजते ॥
प्रियकामितसौन्दर्यं विलसच्चारुकेक्षणम् ।
पुनः पश्यामि तद्वक्त्रं चन्द्रबिम्बमिवोल्लसत् ॥

इति चिन्तयन्नेव तां निशामनैषीत् । एवं स्थिते स्थितकमलवृन्देषु मिलिन्देषु कथं कथमपि प्रियचाटुवचनपरिपाटीनिधुवनस्निग्धासु मुग्धासु अन्याङ्गनालिङ्गनाचिह्नदर्शनकोपसंजातकटुवचनमण्डितासु खण्डितासु उषःसञ्चारिजनसंदर्शनचकिततराकास्वभिसारिकासु कामिमिथुनमनोरथप्रहरणायुधेषु कृमचरणायुधेषु । आप्रातःकालपरिपालननागरूकश्वशुरदन्तधावमानममयकृतनिधुवनेषु पांसुलाजनेषु भक्ष्यभ्रमोत्स्वयमानशेफाचलयानेष्विव खण्डितद्विजवसनेषु महाराजसैनिकेष्विव आकुलीभूतकुन्तेषु बालापचितकुसुमेष्विव नखाङ्कितहस्तेषु अपुरोभागस्थितमन्त्रिजनसंछापपरदनावदनेष्विव पश्चात्तापिनकण्ठमालेषु ग्राम्य-

१ शनिः आरनालुकश्च । २ नरेन्द्रो विषवैद्यः राजा च । ३ सुमनोगणाः देवगणाः पुष्पाणि च । ४ बृहस्पतेः । ५ पुत्रत्वमं सविता पिता सूर्यश्च ।

जनपालितशुकेष्विव किञ्चिन्मलिनपत्रेषु बहुव्यापारव्यग्रवाणिग्जनेष्विव अक्रमवेष्टितनीवीषु मत्तमङ्क्कुपितेन्द्रेष्विव मुक्तपयोधरबन्धेषु नलकूबरेष्विव दन्तदष्टरम्भोरुषु नमुचिशूलाघाततदून-गजेन्द्रेष्विव आयस्तकटेषु निर्मुक्तेष्विव मुक्तकञ्चुकेषु कौस्तुभेष्विव मनोज्ञमणितोच्छसितेषु वेनेष्विव गलिताङ्गरागेषु अप्रगल्भकाव्येष्विव विभ्रष्टालङ्कारेषु तरुणीजनेषु वारुणीमनोविलासेष्विव अनुभूयमानशेषसुरतसुखेषु जाते जगन्मङ्गले प्रभातसमये कस्मिंश्चिद्राजमन्त्रिणि समागत्य कृतमङ्गलस्नानेन देवेन भवितव्यम् अयमयं त्वरयति देवः कल्याणमण्डपिकाप्रवेशाय वियन्महीपालः सूर्यश्चेति वदति श्रीनिवासस्तु तथा कृत्वा स्वयमेवागत्य राज्ञाकारितः सभां प्रविवेश ।

तत्र तु वैवाहिकानां परस्परं परिहासपेशलाः वाचः प्रसरन्ति स्म । तथा हि । कन्यापक्षगाः स्त्रियः । भुजङ्गादत्तमानसे वारुणि कुङ्कुमेन सत्कुरु भालम् । पितामहाश्लेषरसिके सरस्वति हरिद्रया लिम्प कुचकुम्भौ । चण्डि पार्वति पुरतो भव । गुरुहृद्यपयोधरे तारे स्वीकुरु वीटिकाम् । तापसहितालिङ्गने ऽरुन्धति आसन उपविश । इति ।

तथा च । वरपक्षगा वनिताः ।

पीडितः स्तनभारेण तव पीनपयोधरे ।
धरे वियन्महीपालः सिद्धार्थो भूभृदप्यभूत्[3] ॥

---

१ शरीरशक्तिमा अङ्गारकः प्रसिद्धः । २ आकाशस्य राजा पक्षे तन्नाम ।
३ पृथिवीपालकोऽपि ।

कां चन प्रति । सुमलम्बस्तनि इत एहि । मातङ्गगामिनि किं ब्रूहि । दोषाकरमुखि क स्थेयं । अवरलसद्रागे श्रान्तासि । इति ।

अथ तस्मिन् व्यतिकरे ।

त्र्यय्यन्तैर्यदवर्णि यच्च विबुधैराश्लेषि यत्तापसै-
राध्यायि व्रजवल्लभीभिरनिशं चाश्लेषि यत्सम्भ्रमात् ।
यच्चाहल्यि समुद्रराजसुतयाप्याराधि मद्देशिकै-
स्तच्चाक्षालि पदं वियन्नृपतिना कन्याप्रदानोत्सवे ॥

किं च ।

अङ्घ्रस्य दशाननो नलरणैर्ब्रह्माण्डभाण्डक्षितिः
स्पर्शस्य प्रणतेः कयाधुतनयः संकुट्टनस्योरगः ।
यात्रायाः पितरो द्युशैकतटिनीपांसोर्महत्त्वं विदु-
र्यस्य श्रीचरणस्य तं नृपवरः प्रक्षाल्य धन्योऽभवत् ॥

अत्रान्तरे तत्कालयोग्यगीतिकां पपाठ तदुचितो जनः ।

तथा हि ।

याः प्रोक्ताः सुरपारिजातहरणे या भूमिजोन्मूलने
याः कंसस्य निबर्हणे कुवलयापीडस्य याः संहृतौ ।
ताभिः सम्प्रति नूतनेतरगिरां श्रेणीभिराशास्महे
कल्याणं कमनीयनीरजदृशोः पद्मावतीकृष्णयोः ॥

क्रोडस्त्वित्यतिसुन्दरः सर इव स्वैरं शचीवत् पुन-
र्यो हर्षरागदापनोदनपटुर्विश्वम्भरानन्ददः ।
लक्ष्मीवन् क्षितिपालशौरिसुतयोः पाणिग्रहे मङ्गलं
दद्यात्पन्नगराजशैलवसतिः क्रोडावतारो हरिः ॥

---

१ भौमासुरनाशनं ।

तिर्यक्कृतिर्यगपाङ्गपङ्क्तिवलनव्याजत्रपामिश्रित-
स्मेरास्यद्युतिसूचितस्मरकृता वेगातिरेकक्रमा ।
सानन्दा हृदि साम्यासूयककञ्चोलीकभक्ोपा बहिः
पार्श्वस्था कमला विवाहसमये दद्याच्चिरं मङ्गलम् ॥

रेखालीभिरलंकृतो विधिरिव सेङ्कमपाल्लुति-
र्वाणीहस्तइवातिपल्लवकुलस्येष्टश्च गाणिक्यवत् ।
पद्मोल्लासकरस्तथा हरिरिव श्रीश्रीनिवासप्रभोः
पादः कृष्णवियन्नृपालसुतयोः कुर्यान्महामङ्गलम् ॥

इति । अथ सम्प्राप्ते मुहूर्ते सावधानेन स्थेयमिति भणति पुरोधोद्वये वादयति घण्टां ग्रामगणके वाद्यमानेषु तूर्येषु गायन्तीषु तद्देशभाषाकुशलासु चिरण्टीषु[1] पठत्सु विविधमन्त्रान् ब्राह्मणेषु आकाशभूपेऽपि आनन्दामृतसरोमज्जन्मानसे पद्मावती देवी स्वाञ्जलिकलिततन्दुलान् श्रीनिवासस्य मौलावाक्षिपत् देवोऽपि तस्याः । अत्रान्तरे । राजपुत्र्याः सखी मदनकलिका धरामरोचत् । देवि पश्य पश्य ।

नानारत्नमया इवाब्जभवया श्रीवज्ररेखान्विताः
किं चैते समदाश्रुनीलमिलिता सचन्द्रकान्ताः पुनः ।
लक्ष्मीनायकमस्तकेऽम्बरमणी रत्नैर्डितास्तन्दुला
मुक्तास्ते तु करप्रवालकलिता हृत्पद्मरागान्विताः ॥

ततः प्रथमं देवो देवीमवलोकयत् । यस्या वदनमिव कुवलयलोभनीयं नयनयुगुलं नयनयुगुलवदब्जसुन्दरं वदनम् । कुचयु—

---

१ चिरण्टी नूतनविवाहिता स्त्री ।

गवि घनघटाकारमञ्जुलाकुन्तलाली कुन्तलालीव सारङ्गत्रपादायिनी कुचयुगली । किं च कटाक्षः सुतीक्ष्णोपि कृष्णः कुचभारं पर्वतस्वरूपोपि गुरुः । अपि च मौलिर्नक्रकचोल्लासितः कटाक्षो नवक्रकचोल्लासितः । कैरवमरविन्दसुन्दरं नयनमरविन्दसुन्दरम् । खशोभितो मध्यभागः नखशोभिनः पाणिः । वसुधासदृशं जघनं नवसुधासदृशोधररसः । बदरसन्निभं वदनं नवदरसन्निभं कण्ठस्थलम् । मन्दो मुग्धभावः अशनिर्वियोगः ।

अनन्तरं सापि तमपश्यत् । यश्चाकारेण प्रतापेन च स्मरविद्वेषी । यस्य च वदने राष्ट्रे च द्विजा मुक्तोपमाः । यस्य च वाहनं मुखं च द्विजराजः । यस्य चामीकरोज्ज्वला गजा उपस्कराश्च । यस्मिन् रक्षति क्षितिं चित्रभित्तिश्चन्द्रशालासु । बन्धदर्शनं विदग्धमुखमण्डने । पयोधरोच्छेदः शरदि । प्रसूनानुरक्ता भृङ्गा न गजाः । अमानोनोल्लासिताः सुहृदो न वाचः । विप्रसवोल्लासिता दशा न स्त्रियः । मत्कुणभूषिता गजशालाः न कुड्याः । अस्त्वेतत् ।

शश्वद्यः सुरसोर्मिकः कमलिनीवर्गं न विस्मापये-
त्पाणिश्च तदीक्षणव्यतिकरो रागानुबन्धोज्ज्वलः ।
स्वीचक्रे कमलापतिस्तदुभयं पूर्वं बबन्ध स्वयं
कामार्तः किल साहसादिव गले माङ्गल्यसूत्रं ततः ॥

---

१ पक्षे स्मर–रविद्वेषीति छेदः । २ मुक्तानां मौक्तिकानामुपमा येषाम् पक्षे मुक्ता इव मुक्तिं प्रापिता इत्यर्थः । ३ चन्द्रो चन्द्रश्च । ४ घ,— । अमीकरोज्ज्वला इति छेदः । पक्षे चामीकरं सुवर्णम् । ५ अ, मा नो, न, इत्यक्षराणि निरर्थकानि । पक्षे मानेन ऊमा मानोना न मानोना अमानोनाः अत एव उल्लासिताः । ६ मत्कुणा दन्तरहिताः करिणः पक्षे प्रसिद्धाः ।

ततश्चातिक्रान्ते लाजहोमविधौ विधत्रूपाळः सादरं श्रीनिवासमजीगदत् ।

आशेषाचलमासमुद्रममरक्ष्मां पालयाद्राविडं-
सीणीसास्वरयेभपत्ति च समुद्राख्यं सकोशायुधम् ।
अन्यत्किचिदपि मदीयमवनौ देहश्च ये बान्धवाः
सर्वं तेच समर्पितं तदधुना त्वन्मुद्रया मुद्यताम् ।

किं च वराहदेवो नागतः प्रायेण भूदारतायामपि साम्यमूग इति भाति ।

अथ चागतेषु यथाविभवं यथोचितं सर्वेपि संमानिताः । शेषाय कञ्चुकः इन्द्राय चामरश्रीः चन्द्राय नक्षत्रमाला दत्ता । अन्येपि च देवाः सुमनसो जाताः । परं केनचित् जातिहीन इत्युक्तत्वात् वसन्त असुमनाः आसीत् । शेषः दीर्घदृष्ट इत्युक्तत्वादहितोच्छ्वसितोभूत् । बहुभक्षणाद् वैश्वानरः सहेतिर्गतः । तत्र मम को वापराधः । अपि च देवस्य पुत्री गङ्गा नलिनी वा मालती वा न सन्देहो गतः । अन्यच्च किञ्चित्कालमत्र स्थितेन भवितव्यम् । इति तच्छ्रुत्वा देवोपि किञ्चित्स्मेरवदनः प्राह ।

आर्य मनसात्रैवैनं स्थितं जानातु भवानधुना त्वमनुजानातु वराहदेवाभिवन्दनाय यामि शेषाचलमित्युक्त्वा च । कथं कथमपि अभिनवकन्याविरहदूनौ धराविधत्रूपालौ सांत्वय्य सपरिवारस्तेनाज्ञप्तः पद्मावत्या सह निर्गत्यागस्त्याश्रममासाद्य गरुडवर्गं सर्वानमरगणाननुज्ञाप्य फणीन्द्राचलमगमत्क्रमेण ।

---

१ भूपृथ्वी, भूदेवी च दारता स्त्रीत्वं खनन च । २ जातिपुष्पहीनः पक्षे स्पष्टम् ।

तावुभौ श्लाघ्यसुरतौ सततं प्रमदोज्ज्वलौ ।
श्यामौ पद्मावतीकृष्णौ रेमाते पन्नगाचले ॥

श्रीनिवासोऽप्यविद्वद्भचोलङ्काराङ्कटकादिकान् ।
कवये वेङ्कटेशाय श्लेषमेव हि दत्तवान् ॥

सत्कविना येन यथा परुषाक्षरमित्रभावद्वयेन ।
जनता सुखिता सततं वेङ्कटभूपालचन्द्रेण ॥

गुरुगुरुकृपया यं दुष्करं श्लोकश्लोकैः
प्रकटितनिजकीर्तिः सादरं वेङ्कटेशः ॥

चिरसमयहृदिस्थं पूरयन्काव्यमेतत्
कावेरीव च तादिष्टं श्रीनिवासः कृतार्थः ॥

इति श्रीमद्दीपकव्यपारावारगमननौकायमानचरणाभिवन्दनदृक्कण्ठीरवाचार्यसूरिहारान्तेवास्यन्यतमस्याक्लिष्टरचनापटोः स्वकीर्तिकदम्बधवलितदिग्भित्तिवेङ्कटगिरिनिवासिवेङ्कटक्ष्मापालगुगुणाश्रितस्य अव्ययामापादितसाहित्यकलस्य कविमराक्षसीशोदेशिकचरणसरसीरुहसमर्पितनिजसुतस्य वेङ्कटेशस्य कृतिषु पूर्वः श्रीनिवासविलासो नाम श्लेषोत्तरकाव्यप्रबन्धः पर्याप्तः पंचम उच्छ्वासोऽयम् ॥ ५ ॥

१ भातिशनम् । एतत्पामकात्त्वारं च ।

पूर्वार्धः समाप्तः ।

श्रीः

# श्रीनिवासचम्पूः ।

## उत्तरविलासे

### प्रथम उच्छ्वासः ।

छत्री यस्त्वचलेन गोपरमणीवक्षोरुहैः कन्दुकी
यो वै कालियनागनायकफणाभोगेन रङ्गी च यः ।
दैवैः किङ्करिणेऽग्निना भवानिने नागेन पर्यङ्किणे
कालेनायुधिनेऽङ्गजेन रथिने देवाय तस्मै नमः ॥
सर्वत्र सुमनोवृन्दे रससौरभ्यशालिनि ॥
पद्यं नृसिंहसूरेश्च ममामोदाय कल्पते ॥

अथ कदाचित् स्वामिसरसो नातिदूरे कस्मिंश्चिल्लतामण्डपे श्रीमत्या पद्मावत्या सह विहरति श्रीनिवासे देवेतः किंचित् प्रसरतु दृष्टिः प्रणमत्ययमत्र विपुलकटकोन्नतिर्गाधिराजोऽत्र नगाधिराजश्च भूभृत् अत्रायं महाप्रतापशाली नलः अत्रायमनलो देवः अत्रायमगदः पुरन्दरो नागदो गरुडः अयं भोगहृद्यो वासुकिर्नभोगहृद्यः सूर्यः त्रिनयनसमुद्भवः स्कन्दः अत्रिनयनसमुद्भवश्चन्द्रः सचिनन्दनः ऋष्यशृङ्गः अत्रिनन्दनो दुर्वासा–

---

१ भावारम्भाभिहृद्यः ।

श्चेति निवेदयति वेत्रपाणौ । तालझटितेतिवर्धितरागे शङ्कराभरणमिलिते चित्ररथगाने । भव दत्तावधान इति सम्प्राप्तहरितत्वे ऋषिरूपे तथैव तादृशे पद्मावतीस्तनद्वन्द्वे चेति पक्षिरूपे भणति शुके । सूर्यनन्दनत्वान्मन्द इति च्छायापुत्रं नतापकारित्वात्कलङ्कीति चन्द्रं सहेतिआरुरुशानुभावमावहतीत्यभिमपहसत्सु विदूषकेषु उद्यानद्वारपः सविनयं व्यजिज्ञपत् । देव द्वौ भूदेवावागतौ देवं द्रष्टुमिच्छतः ।

श्रीनिवासः—शीघ्रं प्रवेशय ।

तनस्तावागत्य यथाविधि कृतोपचारावुपविशतः स्मः ।

प्रथमः—

शङ्खचक्राब्जकरयोर्यात्रीत्रासितहंसयोः ।
लसत्पयोधरद्युत्योर्दम्पत्योर्भद्रमस्तु वाम् ॥

द्वितीयः—

कलापैः कलापी च तार्क्ष्येण तार्क्षी लसन्मौक्तिकोद्दामहारेण हारी।
रमाकाश्यंपीचारुपाङ्गैरपाङ्गी सदेवोस्तु मद्वाचि दत्तावधानः ॥

श्रीनिवासः—निर्द्वैता वयमाशीर्म्याम् ।

प्रथमः— भवद्वेषिणश्च ।

द्वितीयः—सद्राश्लेषविचक्षणो भवानिति द्रष्टुमुत्कण्ठितं नश्चेतः ।

तच्छ्रुत्वा साहित्यसारमञ्जूषा कमलिनी प्राह । न केवलं पक्षमेव किं तु वनितानामपि ।

श्रीनिवासः—चटुवचनेनालं कुप्येद्देवी कमलिनी ।

१ यात्रा गमनम् । २ काश्यपी भूदेवी । ३ मुक्तिदायाः । चतुरश्रे भलंत्रासाः ।

प्रथमः—देव कुपिता कुलजा कान्ता तप्तकनकमालिकेव कोपागमेधिकां रुचिं वहति ।

श्रीनिवासः—क्व स्थितिर्युवयोः ।

द्वावपि भणतः—

नदी वेगवती दिव्या नागाचलविभूषणम् ॥
दैवं स्यात्तारकानन्दो यत्र सा नः पुरी प्रभो ॥

श्रीनिवासः—तत्र कीदृक् राजा ।

द्वावपि—

अहीनगुणस्तत्र भाति नरानुग्रहकारकः ।
गजदानधुरीणश्च तत्रत्यो राजशेखरः ॥

श्रीनिवासः—प्रजा कीदृशी ।

द्वावपि ।

उज्जृम्भन्माल्ली मौली भोगिभोगाः करे स्थिताः ।
उत्तंसे चाब्जकलिका यत्र संस्थितिशालिनाम् ॥

कमलिनी— । सस्मितं । अहो चतुरता कवितायाः । यत्काश्ची काशी च युगपद्वर्णिता ।

अत्रान्तरे । कंचन मृङ्गं सितसरोजमलंकुर्वाणं दृष्ट्वा श्रीनिवासः प्राह ।

नदन् किं वक्ति सारङ्गः पुन्डरीकसमीपगः ।

इति तच्छ्रुत्वा द्वयोरेकः—देव ।

निकटस्थेऽभयोस्त्यद्य सारङ्गवरदे त्वयि ॥

द्वितीयः—

---

१ गजेन्द्रवरदौ ।

वंरदस्तद्युगुलयोः श्रीनिवास भवानीति ।

कमलिनी—

केशैरास्येन च हृता स्त्रिया ते सम्पदावयोः ॥

आकर्ण्य च दरदलितासितसरोजदामोद्दामगर्वसर्वङ्कषेण कटाक्षकलापेन नन्दिततद्वाचि देवे । प्रसन्नमनसं विदित्वा प्रथमः—

हस्तश्चापं त्यजति वहतो लोचने नीदनाशं
चित्रं चेतस्त्यजति रसना वाञ्छति त्वद्रिपूणाम् ।
हंहो गां च त्यजति वदनं स्वीकरोत्युत्तमाङ्गं
युद्धे जाते गुणविनिमयः श्रीनिवासक्षितीन्द्र ॥

द्वितीयः—

विजयश्च चापवदये रथवाद्विचक्रो
बाणालिवद्गजति हन्त विलक्षलावम् ।
स्वस्यैव सौख्यतातिवच्चपलायमानः
श्रीश्रीनिवास नृपचन्द्र तवारिवर्गः ॥

पुनः प्रथमः—

नेत्रयोः शरनालानि कीर्त्या चापश्रियं वहन् ।
ज्याकर्षणपरः शत्रुर्दृष्टः श्रीवेङ्कटप्रभोः ॥

द्वितीयः—

प्रतिकलमनुभुकरसो वाहिन्यनुकूलगमनकृतचित्तः ।
चरति भवानिव तेरिभूभृत्कटकेषु वेङ्कटक्षेश ॥

श्रीनिवासः—

चक्रं वा श्रियमपि वा तार्क्ष्यं वा शेषनागराजं वा ।
दद्यां सत्कविवर्यौ तुष्टेन सदा न चात्र सन्देहः ॥

साहित्यसारमञ्जूषा कमलिनी आह—

मधुरालापद्विजकुलसुपक्षपातैकसुन्दरप्रकृतिः ।
भूभृत्सुपन्नगाद्रिर्दृष्टः श्रीश्रीनिवासभूपश्च ॥

तच्छ्रुत्वा द्वावपि ।

अरिरूपं चक्रं श्रीरधिकमलस्था पतत्ययं तार्क्ष्यः ।
नागो विषमोऽहितोऽयं दययालं श्रीनिवास भूप तव ॥

ततश्चातिभूमिं गतः संतोषेण बहुधा संमान्य महाकवी ।

विना सुरमणीं देवः सर्वाण्याभरणान्यदात् ।
तथा पद्मावती ताभ्यां ददौ स्वं नायकं विना ॥

ततस्तयोर्यथास्थानं गतयोर्हंसशुकयोर्महाकव्योर्देवोऽपि पद्मावत्या सहान्तःपुरमभजत् ।

जृम्भन्नवरसोल्लासा नानाबन्धमनोहरा ।
मदीयकवितेवेयं क्रीडा रेजे तदा तयोः ॥

इति श्रीमद्वेङ्कटाध्वरिमहाकवीन्द्रकृतौ श्रीनिवासविलासचम्पूकाव्ये उत्तरविलासस्य प्रथम उल्लासः पूर्णोऽयं ज्ञेयः ॥ १ ॥

—०:०—

## द्वितीयोल्लासः ।

अन्यदा तु कचिच्चक्रग्रहणव्यग्रया चरणमुखरक्करालहंसमिथुनविघटनपरया मानिनिकर्तिनिकरया अनिमिषकदम्बदत्तकटा-

---

१ वेंकटाचलः । २ चक्ररूपं अरायुक्तं च । ३ अधिकमलेषु स्थिता । पक्षे कमलमधिष्ठिता कमलमधिवासिनीत्यर्थः । ४ शेषः पर्वतश्च । ५ विषयुक्तः विषमस्थलयुक्तः । ६ देवमणिं । स्त्रीं च । ७ नायकमलङ्कारविशेषं च पतिं च ।

क्षया अनुगृहीतपुण्डरीकया लालितकमलाशयया स्वसमानचर्यया देव्या पद्मावत्या सह कुत्रचित् सरसि विहृत्य तत्तटभुवि अक्ष-क्रीडारतस्य श्रीनिवासस्य नयनसरणिमुपजगाम कविकदम्बम् । तच्च प्रतिनन्दितागमनं यथायोग्यं उपाविशत् । तत्र कञ्चन मभिनवं द्विजं विलोक्य देवः प्रपच्छ । कवे नीलकण्ठकिमर्थ-मागमनं भवत इति ।

सोपि विहस्याब्रवीत् । देवाहमपि तदेव चिन्तयन्नागमननिदानं कलयामि ।

तथा हि । भाग्यवन्तं भवन्तं द्रष्टुमागतोस्मि इति साधारण-सरणिः । याचितुमिति स्वलाघवप्रकटनम् । मद्विद्याप्रकटनार्थ-मित्यात्मस्तुतिमहापातकम् । आमं गच्छंस्तृणं स्पृशतीत्यादि-वत् प्रकृतविरुद्धालापः । इन्द्रचन्द्रसमानस्य तव दर्शनादैहिका-मुष्मिकफलमिति बन्दिचरणानुचरणप्रसङ्गः । अस्तु वा यः क-श्चन हेतुः । तथापि दर्शनयोग्यगुणकत्वं देवे न पश्यामि ॥ दा-नधारार्द्रीकरत्वं त्वदन्तावलेष्वपि । सदाचरणरत्नभूषितत्वं तव वनितानानेष्वपि । सूर्यप्रतिपन्थित्वं तव प्रतापेपि । अथ वा महा-नुभाव इति गृणामि चेत् कृशानुभावं वहतीत्याक्रन्दते शत्रुवर्गः । विद्वत्सु प्रीतियुक्त इति चेत्कलावत्कोटयस्त्वत्कीर्त्या तिरस्कृ-ताः । सुन्दरोसीति चेत् प्राग्जन्मनि कांचन सुन्दरतां हरता त्वयैवापराद्धम् ।

गौतमशास्त्रप्रक्रियासु कुशल इति चेद्दुःखप्रयत्नाधर्मा न ना-नामि । प्रथम रोकरोपि गुणं न द्रव्यम् । शब्दरादान्नचतुरो-

मीति चेत् तद्धितविचारं न करोषि इति अभक्तानां वादः । वेदान्तशास्त्रप्रवीणोसीति चेत् वेदनयाक्रान्तो न कापि भवान् । मदनागमदृष्टोसीति चेत् तदा विद्वन्निकुरम्बपरिपन्थिनदीक्षाधीरेयतापिशुनकरगतवीरवलयेक्षणं वितर दृष्टिम् ॥ अस्तु वा यं कञ्चन गुणमादाय दर्शनयोग्यता । तथापि नावयोर्भिन्नद्वयमाक्रान्तयोरुचितः समागमः ॥

निरतो यशःप्रसारे भवान्यतो वैशयप्रसारेहम् ।
काहं क भवान् राजन्नवनीपस्त्वं वनीपोहम् ॥
दूरीकृतकलिर्यस्मात्तस्मादस्य विभीतिकः ।
न चापि मदनासक्तो युक्ता तेह्यवनीपता ॥
सरलप्रियोस्मि शम्भुल्लासी पुन्नागसुप्रियश्चापि ।
सत्सुमनोवृत्तिरपि सभुवयं ततोवनीपता मेभूत् ॥

अथ तत्र हंसकविः प्राह । देवाहमेवं जानामि ।

भूदेवेन्द्रः कविः शश्वद्राजमानगुणोत्तरः ।
अयं स्वरसमतां धत्ते देवमानवशङ्करः ॥

ततः शुकोवदत् ।

श्रीनिवासाम्बुजमुखविकासकपद्यावलिः ।
अनन्तोल्लासमाधत्ते हंस एवेति विद्महे ॥

ततः कमलिनी प्राह । सुकवे । जम्बूजलबिन्दुजलजलदजालवज्जालवत् । इतीयं समस्या पूरणीयेति । ततः नीलकण्ठकविः ।

वर्णालङ्करणं तनोति नितरां यज्जीवनं प्राणिनां
सूर्यानन्दकरं विसारि भुवने यद्दोषरोल्लासकम् ।

१ तेषाम भक्तानां हितस्य विचारलम् । पक्षे तद्धिताः प्रत्ययाः । २ वेद-ना यातना तया पक्षे वेदेन नयेन चाक्रान्तः । ३ याचकः ।

भात्युच्चैर्यशसा कदम्बकमिदं श्रीश्रीनिवासप्रभो-
र्जम्बूवज्जलबिन्दुवज्जलजवत्सम्यालवज्जालवत् ॥

श्रीनिवासः— महाकवे नीलकण्ठ सर्वतः श्लाघ्या ते वाणी । अपीदानीन्तनं कालं वर्णय ।

नीलकण्ठः—

भवान्हि सद्वेपपराङ्गनाशं चक्रे लसद्वेपपराङ्गनाशम् ।
द्विद्विर्दिशेत्यक्षरमावधानो भूयान्मदीयाक्षरमावधानः ॥

श्रीनिवासः— अवहितोस्मि ।

नीलकण्ठः—

विघटितचक्रो विगलितहरिमण्डल एष वीतनेत्रसुखः ।
सायन्तनकालस्ते रिपुरथचर्यां चरत्ययं देव ॥

किं च ।

हरन् सच्चक्रसंतोषं तमो विपुलयन् बहु ।
देव सायन्तनः कालः भाति दुष्कविकाव्यवत् ॥

अत्रान्तरे द्वारपालेन सविनयं प्रवेशितः कलानिधिनामा कविरागत्य दक्षिणपाणिमुन्नमय्य प्राह ।

पद्मोल्लासभृदा सवीरवलयश्लाघ्यः सुरेखाञ्चितः
पाणिस्ते वरदानगारिमहितानन्द विधत्ते मदा ।
साधर्म्यं विवरीवरीति भवतान्निर्मिताः सोमिक-
स्तद्वैधर्म्यमपि प्रकाशयति म श्रीश्रीनिवास प्रभो ॥

इत्येवं यान्त्या कस्याश्चिद्वेलायामुदितचन्द्रमण्डलमवेक्ष्या—

---

१ भवानि भयकराणि यत्र च । २ साधुसमूह सन्तोष ।

यमपरः कल्यानिधिर्विपुलानन्दं तनोति द्विजराज इति भणति वेलावेदके कमलिनी माह।

उल्लासितगोकुलश्री राधोज्ज्वलरूप एष शिशिरकरः।
चरति हरे तव चर्यां तस्माद्युक्तं विधुत्वमेतस्य॥

नीलकण्ठः।

कमलिनीकल्यानिधिगुणवर्णने परोतिविस्मयः।

हंसः। नैतच्चित्रम्।

पद्मिनीनां परामोदो जृम्भत्यपि पयोधरे।
श्रीनिवासे समीपस्थे द्वेषादेः क्व नु संभवः॥

अत्रान्तरे वेलावेदकः।

रसकल्लोलवान्मीनललामाढ्यः सरित्पतिः।
देव चन्द्रोदये पद्मावतीवास्त्वेव वर्धते॥

श्रीनिवासः। श्रुत्वा सस्मितम्। कल्यानिधिकवये सर्वज्ञचूडामणिख्याति। नीलकण्ठस्य सकलायाः पर्वतभुवः स्वामित्वं कमलिन्यै सर्वतोमुखश्रियमन्येभ्योपि यथाकामं वित्तं वितीर्य प्रमदागारं प्रविवेश॥

इति श्रीमद्वेङ्कटाध्वरिमहाकवीन्द्रकृतौ श्रीनिवासचम्प्वा भुजरविलासे द्वितीयोल्लासः॥ २॥

—०:०—

## तृतीयोल्लासः।

अन्यदा तु क्वापि चिरयति निजनायके श्रीनिवासे देवी पद्मावती कमलिनीमाह। सखि।

---

१ मंघे कुचे च।

अस्तं प्रयाति वसुमानुदयं प्राप्नोत्ययं पुनर्वसुमान्

कमलिनी—विहस्य । किं ततः ।

देवी । सव्रीडं । न किमपि ।

केतकी—देवि कथय कथय ।

कमलिनी हुं ।

किं कथनीयमपरं ज्ञातं चित्ते मुकुन्दोस्याः ॥

देवि—कथमिव ।

कमलिनी—

पद्मश्रीर्नेत्रयुगे शं खरमासा(?) गले च दन्तेषु ।

कुन्दश्रियो यतः स्युर्ज्ञातं चित्ते मुकुन्दोस्याः ॥

देवी— नहि नहि अन्यत् किमपि वक्तुकामास्मि ।

कमलिनी—तर्हि तत्कथय ।

देवी—सुपर्वसुन्दरो राकामनोज्ञः कमलोज्ज्वलः ।

विधुर्हरति मे चेतः ।

कमलिनी—किमपराद्धं मया ।

केतकी—तद्यागतं तथैव सरण्या ।

मालती—कृष्णः किं ।

देवी सहुङ्कारं । नहि चन्द्रमाः कमलिनी—तर्हि अत्र प्रयातोन्यस्यैतदुत्तरार्धं भवितुमर्हति ।

त्यप्यन्ते मञ्जु दीपा रात्रौ मुकुलीभवन्ति पद्मानि । इति ।

देवी—स्तावहित्थम् । अथ किं ।

केतकी—नहि नहि पटवस्त्रस्य कम्बलेन संयोगः ।

---

१ पतशामरी गजा । २ सूर्यः ।

देवी—सरोषमिव । तर्हि किं भवितुमर्हति ।

केतकी—

नायाति सदनमधुना कान्तश्चेत्पीड्यते मनो मधुना ।

देवी सलज्जमातिष्ठत् ।

कमलिनी—दुःसहः खलु विप्रयोगः सिंहमध्यानां मध्यानां । यल्लज्जापि द्वितीयो मदन इव पीड्यति ।

केतकी—कृपणानां चेति वक्तव्यम् । मां किं पुनर्द्विजराजवियोगः ।

अत्रान्तरे द्वारपालिका मल्लिकाऽऽगत्य । देवि वर्धसे यद्देवः श्रीनिवासः प्राप्तोयं भवनद्वारे तिष्ठति ।

सर्वाः सचकितमुत्थायान्तः प्रविश्य बद्धकपाटा अतिष्ठन् । ततश्च देवोपि अन्तः पुरकपाटमासाद्य

देवी—मन्दंमन्दम् । सखि कमलिनि तूर्णीं तिष्ठ । छलाम्येनम् ।

मालती—एवमेव कर्तव्यं एकाद्विवारम् । येन देवोपि ज्ञास्यति ज्ञातव्यम् ।

देवी—कस्त्वं ।

श्रीनिवासः—चक्री ।

देवी—साश्चर्यं । नोन्द्रालयभुवि ।

श्रीनिवासः—ललने श्रीनिवासः ।

---

१ अत्रेदं श्लोका—

कस्त्वं चक्री नरेन्द्रालयभुवि ललने श्रीनिवासः सुमन्त्रि-
श्चाप्यार्ये हारिम रम्यः शशिमुखि कमये ताड्यराजात्मजायाम् ।
मद्वांसे हेहिहर्हि मधमदाति पदपात मादः स लोका ।
कंसारि: शदिम स्फुरदिन यदि हरी सा जहासोत्पलाक्षी ॥

देवी—समन्दहासं । सुमन्त्रिश्लाघ्यायाम् ।

श्रीनिवासः—हास्मि कृष्णः शशिमुखि ।

देवी । सावहेलम् । कमये तार्क्ष्यराजाङ्कतायाम् ।

श्रीनिवासः—मद्योगे देहि दृष्टिम् ।

देवी—सरोषम् । स मम पतिपदाघातभग्नः ।

श्रीनिवासः—स को वा ।

देवी—सलज्जम् । सखी कमलिनि न जानाति अयं देवस्य नामापि त्रिभुवनरक्षाधौरेयस्य ।

कमलिनी—भण भण शृणुमस्तावद्वक्तव्यसीमाम् ।

यन्मकरन्दरसौघे यच्च तरङ्गः सुधासमुद्रस्य ।
यच्चैन्दवकरसारो यच्चासारो मृगाक्षि गोस्तन्याः ॥

श्रीनिवासः—स्वगतम् । परोक्षेपि प्रणयभूयिष्ठानि कमलिनीवचनानि शीतलयन्ति मे मानसम् ।

देवी—कंसारिः ।

श्रीनिवासः—सोहमस्मि ।

ततश्च । इत्युदितवति हरौ रागहासोत्पलाक्षी ।
कमलिनी देवैतावत्कालपर्यन्तकं क्व भवान् ।

श्रीनिवासः—श्रूयताम् । तत्र तत्र वनलताकुञ्जेषु राधोत्सवमनुभवता मया यापितोर्धरात्रः ।

देवी—स्वगतम् । अहोद्यापि न विस्मरति राधाविलासो देवस्य ।
नाराणां मानसं नित्यं पांसुलामनुधावति ।

---

१ वसन्तोत्सवम् । २ व्यभिचारिणीम् ।

शतंतारापतिश्चन्द्रस्तारामन्यामकामयत् ॥
त्वं तत्त्वमान्तरं शश्वत्त्वं वै प्राणा बहिश्चरा ।
इत्युक्त्वैव पुनः कृष्णो यद्वा दैवमदक्षिणम् ॥

प्रकाशम् । धार्ष्ट्यमवलम्ब्य । किमत्रागमने कारणम् ।

श्रीनिवासः—सदङ्गनाशरणद्वारामिति ।

देवी—अङ्केति साम्रेडितम् । नेदं युद्धस्थानम् ।

श्रीनिवासः—न केवलं स्वल्पयुद्धस्थानं किं तु अतनुर्युद्धस्थानमेतत् ।

देवी । सत्रपानन्दं कपाटमुद्घाट्यातिष्ठत् ।

ततश्च श्रीनिवासे प्रवेष्टुमिच्छति सति प्रसार्य बाहुं तिर्यग्द्वारदेशे स्थित्वा कमलिनी ।

मागच्छ शोणिमा नेत्रे पद्मावत्या विराजते ।

श्रीनिवासः—

रजःस्नातासु नारीषु प्रायेणैवं भविष्यति ॥

कमलिनी—मानवतीति ब्रवीमी ।

श्रीनिवासः—बहुधामानवतीति वक्तव्यम् । मध्यस्थासु युष्मासु किं न्यूनम् । देवीं प्रति ।

पद्माभं मुखमक्षियं कुवलयश्रीसत्क्रियार्हं च ते ।
दृग्वत्कुन्तलवन्मृगाक्षि सुमनश्रेणी मनोज्ञे तव ॥
रम्भाधिकृतिदक्षमूरुयुगवद्वक्षोजवत्तेचलं—
श्रीकं मानवदङ्गनेति चपलं नीयाच्छरीरं सदा ॥

देवी—देव सुराधिकोल्लासरीतिमेव भज । तथैव समप्रदो भव ।

कमलिनी—देवीं प्रति ।

कोपः कृशानुभावं वहतु च मानः कुलास्त्रिया रक्ष्यः ।
देवि हितं कथयामि शृण्वेनं कञ्ज्य मां भुजङ्ग इति ॥

---

१ शतं मताः ताराः पक्षे एतन्नामकं नक्षत्रम् । २ मदङ्ग—नाश रणद्वारम् । मदङ्गना शरण द्वारम् । ३ मदङ् युद्धस्थानं मदनयुद्धस्थानं च ।

श्रीनिवासः—स्वगतम् । कमलिनीवचनमपि कर्दमतम्ममतोऽसीमा श्रयति । प्रकाशं ।

स्पृशाम्यहीनां मालां च त्यज कोपमणूद्रे ॥
शब्दविन्यासदोषो मे नाहमव्यापराधिकः ।

कमलिनी—स्वगतम् । अत एव देवी कुप्यति । प्रकाशम् । देवि शृणुमस्तावत् किंनरो गायति ।

१किंनरः—

सश्रीकं मानितं देवासुरसंघैर्घनमप्यम् ।

मानगम्यमहो हन्त

कमलिनी—देव श्रवणातिथीकृतः स्वल्वयं पादोनः श्लोकः ।




१ कर्दमवर्ती मार्गः ।

श्रीनिवासः—सखि नानाम्यष्टदलपद्मबन्धनिबन्धनमेतत् । अस्य तुर्यः पादः श्रीनिवासं नमाम्यहम् ॥

किंच ।

अमहचारुसौन्दर्यं सुरागश्रीयुतं मनः ।
गीतं हरति पद्माक्षि देवी स्तनयुगीव नः ॥

देवी वस्त्रान्तेन गूहितकुचाऽतिष्ठत् ।

श्रीनिवासः ।

सर्वभूभृत्स्मयहरे जृम्भचक्रश्रियान्विते ।
मयि स्तनद्वये चाद्य नेत्रान्तः प्रसरत्यहो ।

देवी अवनतवदना आसीत् ।

श्रीनिवासः—

सुरोहितललामाढ्यं राजवृन्दजयावहम् ।
अधः करोषि सुरते कस्मान्मामिव ते मुखम् ॥

देवी—उन्मत्ताकितकोपविशम् । त्वां सुरते अधः करोतु सा राधा ।

श्रीनिवासः—

हंहो त्वमेवहि सदानन्दनोपमनोहरा ।
गोरैमैः मुखदा पद्मावती सा राधिका मता ॥

देवी—स्मितम् । आस्थिरान्तरस्यास्य वेणोरिव मधुरा गिरो बहिः प्रसरन्ति ।

कमलिनी—यावत् तुष्यति तावत्कर्षणं नोचितम् ।

---

१ गोपीरमैः । इत्याद्रिभिश्च ।

देवी—उभयत्रापि तव स्थितिः ।

पुनः किन्नरः—

घटयति वियोगिचक्रं तनुते नितरां हि कुवलयोद्बोधम् ।
किमयं महिमा रात्रेर्यद्वा चरितं निशान्तकालस्य ।

कमलिनी—तर्हि प्रबोधकालः पद्मिनीनाम् ।

केतकी । न केवलं स्थावराणां जङ्गमानां च ।

देवी सापराधेवाकुला कुलनक्षत्रमालं म्लायच्चन्द्रमुखं गगनमपश्यत् । श्रीनिवासोपि तद्देहम् । ततश्च श्रीनिवासेप्यसहमानमीनकेतनावेगेन देव्यां प्रसारयति पाणिम् ।

कमलिनी प्राह । देवि ।

जृम्भत्केसरमालो मुग्धे सारङ्गनिर्गतिनिदानम् ।
भवतीं गृहीतुमिच्छत्येष हरिः कोत्र शरणं ते ॥

देवी—सभयम् । आर्यपुत्र त्रायस्व मां हरिर्गृहीतुमिच्छति इत्यालिलिङ्ग ।

श्रीनिवासः—माभैर्वियद्भूपालतनये । इत्याश्वास्य अघटितघटनापटीयसीं नियतिमभिनन्द्य तया सह मृदुलां शय्यां सुकविकाव्य इव प्रविवेश ।

इति श्रीमद्वेङ्कटाध्वरिकृतौ श्रीनिवासचम्प्वां उत्तरविलासे तृतीय उल्लासः पूर्णोयम् ॥ ३ ॥

---

१ विकसितकेसरगणपुरस्सरः पक्षे विकसितकेसरसमुदायः । २ हरिणनिवर्तने कारणम् निवर्तनेन्वात् । मार्गः कस्तीव । हरि विष्णुः सहय । ३ दैवत विषम च ।

---

एकदा तु वेङ्कटवराहकलत्रं धरादेवी स्वामिसरस्तीरे हसन्ती प्राह । पद्मावति कलितपर्वतास्थितिराभिनवतया अस्मद्विहारस्थलीं भूधरं विलोक्य चित्तजातकुतूहलेनाक्रान्तेव वर्तसे ।

पद्मावती—स्वगतम् । अहो परिहासपरिपाटी वसुमतीदेव्याः । प्रकाशम् । देवि धरे । इयं कादम्बिनीश्यामला व्यक्तिस्तरलयति मे मानसम् ।

धरादेवी—सत्यं वदसि पीनपयोधरमहिमायम् ।

पद्मावती—धरित्रि राजहंसविहाराभावान्न शोभते वेलेयम् ।

धरादेवी—सखि वैकुण्ठः क गतः सुन्दरि ते भर्ता ।

पद्मावती— स्वगतम् । देवं श्रीनिवासमपि स्पृशति । इतः परमार्यमर्यादा पटले स्थाप्या । प्रकाशम् । अयि वसुधे इदानीमेव युष्मत्क्रोडदर्शनार्थं गतः ।

धरा देवी—तेन किं फलम् ।

पद्मावती—रतिं विना किमन्यत् ।

धरा देवी— भूलीकृतदाक्षिण्यमिति किं न भणसि ।

पद्मावती—रक्षितमर्यादया मया न स्पष्टमुक्तम् ॥

अत्रान्तरे सश्रीनिवासो वराहस्तमेव देशं प्राप्तः प्राह ।

---

१ कादम्बिनी मेघमालेव श्यामला श्यामवर्णा पक्षे कादम्बिनी इयत् पदम् । २ तारतम्यमहिमेत्यर्थः पक्षे पीनपयोधरा मेघा एव । ३ वराहदर्शनार्थम् । पक्षे क्रोडं वक्षःस्थलम् । ४ रतिः प्रीतिः क्रीडा च । ५ भुवा भूदेव्या भ्राजितं दाक्षिण्यं मार्दवं यस्य तत् । पक्षे भूस्वीकृते मारत्यम् ।

वत्स वासुदेव वृषाकारः कश्चिद्दैत्यः श्यामाकक्षेत्रदूषक इति श्रुतम् । अतो योद्धुमिच्छामि ।

श्रीनिवासः— वसुन्धरारमण । जरतोपि देवस्याद्यापि अतनुर्युद्धस्पृहा न विरमति ।

वराहः—वत्स वसुंधरारागो दुष्परिहारः ।

श्रीनिवासः—तर्हि किरिचक्रं प्रेषय ॥

वराहः—सहस्रारं चक्रमेव प्रेषयामि ।

श्रीनिवासः—अहमपि देवस्य सहायो भवितुमुत्सहे जराशिथिलितसन्धिबन्धावयवस्य ॥

वराहः—विहस्य । कृतं कृतमतिसाहसेन ।

येयं हिरण्याक्षनियोधनसहायभूता साहाय्यं करिष्यति धरणीकुचभारादपि गुरुतरी गदा त्वं तु वसुधां पद्मावतीं च ममागमनं च प्रतिपालयिष्यसीति प्रचालितः ।

श्रीनिवासः—देवि धरे इदानीं मदधीनासि खलु ।

वरदेवी—देव यदा रसातलादुद्धृता भवता वराहरूपेण ।

अत्रान्तरे कश्चित्किङ्करः पपाठ ।

> शोकाज्ञातनिदानकहरनर्तनमूलकारणं ब्रूमः ।
> तव सुपयोधरदर्शनमिति यस्माद्गौरि नीलकण्ठोयम् ॥

देवी—आर्या गीयते ।

---

१ मदनयुद्धस्पृहा । मदनो युद्धेच्छा । २ वसुधा पृथ्वी [illegible] एव [illegible] । ३ वराहमृदम् । ४ अद्य । ५ [illegible] [illegible] [illegible] मात्र ।

तच्छ्रुत्वा लक्ष्मणा नाम सखी माह । न केवलं गीयते स्तूयते च ॥

श्रीनिवास —संङ्केय गीति ।

लक्ष्मणा—देवीस्तनद्वयीव ।

श्रीनिवास — समन्दहासम् । अनन्तरागमनोहरया देवीस्तनद्वय्या परिमितरागा किमित्युपमीयते गीति ॥

देवी—साभ्यसूयमिव । इय लक्ष्मणा खलु जानाति कलहसलक्षणम् ।

श्रीनिवास —देवि कुतस्त्वाम्यसि । तानि परिहासवचनानि कुसुमानि ।

देवी— हुं कुसुमानि सुमनानि वाऽनवसरे प्रयुक्तानि तान्येव किं न शरजालानि ।

लक्ष्मणा—देव प्रायेणेय मदनासक्तेव लक्ष्यते ॥

श्रीनिवास — तथा वक्तु जडीमवति मे जिह्वा ।

यतस्त्वयैवोक्तमद्य ।

चकितचकितं कापि कापि प्रमादगतं घन
घनमिव निज कान्त भूयो वने कलयत्यहो ।
विरहविधुरा माकन्दद्रुमभ्रमराङ्गना
रणितमपि सा धत्ते तुष्ट्यै न नागवधूरिति ॥

देवी—स्वगतम् । आ पापया भिन्नं रहस्य । प्रकाशम् । हरिणीवृत्तमेतत् । यत न समरसत्नानुबन्ध ।

---

१ सन् सत्य इति वृत्तानो यस्याम् । पक्षे सम्यावर्तुरा । २ मपि अनसक्ता इति श्रीनिवास भाषणाभिप्राय । ३ हरिण्या वृत्त वतन पक्ष हरिणीछन्द ।

कमलिनी—अतनुसमरसलम्पानुबन्धीति वक्तव्यम् ।

लक्ष्मणा—कारिणीवृत्तमेतत् ।

श्रीनिवासः—तरुणीवृत्तमिति वक्तव्यम् ॥

देवी—सलज्जम् । अलीकमेव वर्ण्यते प्रियसख्या ।

लक्ष्मणा—तर्हि नालीकं वर्णयामि ।

भ्रमरकमनोज्ञमेतत् सौरभ्योत्पत्तिकुलभवनम् ।
भुवनेष्वास्थितिरम्यं नालीकं भाति नृपकन्ये ।

श्रीनिवासः—एतदप्यलीकवर्णनमेव जानामि ॥

एतस्मिन् व्यतिकरे उद्यानद्वारपालेन निवेदितम् । देव सुमनसां विषये का वार्तेति ।

श्रीनिवासः—मालिकाः करणीयाः ।

स तु पुनः प्राह । देव विद्वन्निकुरम्बं द्वारि तिष्ठति इति विज्ञापयामि ।

श्रीनिवासः—विहस्य । प्रवेशय को विचारः ॥

ततः । विपश्चिद्वृन्दमागत्य यथायोग्यमुपविष्टम् । तत्र कश्चित्करोडनामकः प्राह ।

सतीकण्ठे लग्नः करधृतकुमारो न न गैरं
सुपद्मद्रौ तिष्ठन् गमयति च कालं सुकठिनम् ।
इदानीं राजेन्द्र त्वदरिनिवहः स्थाणुसमतां
प्रयात्युच्चैस्त्वं वै मनुजपदवीं यासि किमिदम् ।

अन्यः सोमनाथकविः—

१ वर्णानां पुष्पाणां च । २ कुमारः षडाननः पक्षे कुमाराः पुत्राः । ३ दरं शिवं, मंदरं पुरम् ।

रक्तं स्वाङ्गजमाशु भूमिवलये निक्षिप्य जन्याङ्गने
हित्वा बाणमसौ भिनत्ति नितरां देवस्य सम्पश्यत. ।
मैत्र मण्डलमप्यथोच्चपदवीं भामोत्यरिक्ष्मापति
व्यूहस्ते विजयः कथं तदितरस्तस्मिन् कथं वर्ण्यताम् ।

श्रीनिवासः— सहर्षम् ।

सन्त्येवात्र सहस्रशो युवतयः सा चातुरी दुर्लभा ॥

इति समस्यामाह ।

कहोडः ।

आसक्ते मयि पुष्पिणीति शयनं गेहाद्बहिः कल्पितं
नीतश्च प्रतिवेशिनी कपटव पार्श्वं तदाहं त्वया ।
केलीकण्ठरवः कपोतनिनदव्याजेन गोपायितः
सन्त्येवात्र सहस्रशो युवतयः सा चातुरी दुर्लभा ॥

सोमनाथः—

छित्त्वा पुष्करमालिकां स तु बलादालोलयन् कुञ्जरान्
भिन्दन् कुम्भमसौ कर च कलयन्नाकर्षति स्म स्फुटम् ।
कृष्णः किं न हि केसरीत्युपवने श्वश्रूस्तया वञ्चिता
सन्त्येवात्र सहस्रशो युवतयः सा चातुरी दुर्लभा ॥

श्रीनिवास —स्वगतम् । उद्घाटितं मर्म महाकविभ्याम् । म-
त्युक्ता खलु सा सरणिः ।

कमलिनी—देव कदा ।

श्रीनिवासः— यदादिमधुराधरा स्वीकृतिः । तिष्ठत्वेतत् । महाकवी मेवावली वर्णनीया ।

---

१ मे सुधावल्ली कविमते पदच्छेद ।

कहोडः—शिवशिव । अस्पष्टदोषगन्धे देवेष्टमरसहचारी पापाली ।

श्रीनिवासः—कादम्बिनीं वर्णय

कहोडः । देव वर्षासमये हंसाङ्गनानां न प्रचारः ॥

श्रीनिवासः—एनां जलधरावलीं वर्णयेति भणामि ।

कहोडः—स्वगतम् । कथं राजदारान् वर्णयामि ।

प्रथमः— यदाज्ञापयति देवः ।

अतिरोहितकान्त्यधरश्रीवत्सजवनलक्ष्मिकुन्तलवत् ।
गिरिमधुरं कुचयुगवदेव शरीरं लसत्यस्याः ॥

सर्वाः स्त्रियो हसन्ति ।

श्रीनिवासः—कन्ये पयोधरपालीं वर्णयेति भणामि ।

कहोडः—

चक्री विरूपधारी नापि गुरुत्वं कदापि कलशस्य ।
तस्मादनुपमलीलो भात्येतस्याः पयोधराभोगः ॥

श्रीनिवासः—नीरदावलिं वर्णय ।

कहोडः ।

पूषा त्वेकः कोपयित्वा त्रिनेत्रं कालिङ्गश्चाप्यस्यगोष्ठ्यां द्वितीयः ।
दन्ताभावान्नीरदः कामपालवार्तीयोऽकं नैव जाने धरित्र्याम् ॥

कमलिनी—महाकवे । वार्धके सर्वो जनः नीरद इति स्तुतो न कथयसि ।

देव—सस्मितम् । सुकवे गोमूत्रं वर्णयेति ममाशयः ।

---

१ कुचयुग्मवत् । २ कविपदे अदन्तादर्शम् । ३ दिवं प्रज वा वर्णितम् ।

कहोडः—उच्चैर्हसन् । देव तथा भण पुनः । मेघादिशब्दैर्वयं वञ्चिता ह्यर्थैः ।

हंसानन्दमपाकरोति धरणी कीर्तिं तनोति स्फुटं,
सारङ्गं परिपाति नाशयति तत् कीनाशदुःखं सदा ।
कामं वर्षति चागमान् कलयति मोज्जृम्भितान् संततं
जीयाद्वस्तु ददाति चामृतमपि श्रीकृष्णनीलाम्बुदः ॥

सोम— देवाहमेवं तर्कयामि ।

अपहस्तश्चन्द्ररुचिं दधतः करकश्रियं च घनतां च ।
उचितं पयोधरत्वं राजन् सरसस्य मेघस्य ॥

अस्मिन् व्यतिकरे वेलावेदकः पपाठ ।

दैत्येन्द्रहृत्तटविपाटनपाटवाद्य-
कण्ठीरवास्यघनगर्जितदेशिकोयम् ।
क्ष्माभृद्गुहामतिरवाढ्यगुणो वराहः
देवस्य जृम्भति मुहुर्नय शङ्खनादः ।

इति श्रुत्वा वृषभाकारं दैत्यं निहत्य मतिनिष्ठेन भगवता क्रोडेन भवितव्यमिति सर्वाननुज्ञाप्य स्वयमपि तत्स्थानमगमत् ।

इति श्रीनिवासविलासाख्यचम्प्वां उत्तरविलासे चतुर्थ उल्लासः ॥ ४ ॥

—०:०—

## पञ्चमउल्लासः ।

अथ कदाचित्प्रभातसमये वेत्रपाणिर्व्यानिङ्गपत् ।

---

१ कीनाशदुःख इत्यविरुद्धं भद्र मण्डु स प । २ आगमान् उन्मान वेदांश ।

घनतिमिरहारिसम्पन्नयति हि कृष्णमनोधरुचिरश्रीः ।
सर्वत्र शरद्गमने सूर्यो देवर्षिरपि गृहद्वारि ॥

श्रीनिवासः— ससंभ्रमानन्दादरमुत्थाप्य संमान्य भगवन्त नारदमास्थानमण्डपं प्रवेश्य महर्षे कुत आगमनमित्याह ।

सोप्यवदत् । भवद्दर्शनार्थं विरञ्चिलोकात् ।

श्रीनिवासः— अनुगृहीतोस्मीति ।

नारदः ।

कीर्तिः सोडुपसन्ततिर्हि तरणिः श्रेणी प्रतापश्च ते
साचिव्यं गुणसिन्धुपारगमने कुर्यादिति श्रद्धया ।
दृष्टे मय्यचलादिमातदितरा दृष्टान्य रोधाभवत्
कुर्वे किं नु तथा विरुद्धगुणयोः श्रीश्रीनिवासप्रभो ॥

श्रीनिवासः—अहोमहत्वारोपप्रकारः । भवतु भगवतः श्वतानन्दस्य सभायां कीदृशी प्रवृत्तिः ।

नारदः—
प्रणमाय्यं समार्थः सनकः पुरतः सनन्दनेश्चाति ।
कथयति वेत्रकरोपे सामि स्मितमातनोति परमेष्ठी ॥

किंच ।
इयं नवरसोल्लासवाणी चित्तं धिनोति नः ।
इति काव्यश्रवण्यानात् भार्यां स्तौति चतुर्मुखः ॥

श्रीनिवासः—महर्षे सर्वतःश्लाघा ते भारती अपि नाम कथय विपत्रृपा ऽराजधानी वृत्तान्तं किमप्यभिनवम् ।

नारदः— देवलोके पातालस्थानकाशपूरान्ते तदनरमस्तोऽविज्ञान-

---

1 पारमन्धकारथ ।

स्तत्पुत्रः कुमारश्च राज्यार्थं योद्धुमिच्छतस्तस्मादहमेतेन वृतान्तेन देवं योजयित्वा युद्धदर्शनार्थं सत्वरं गमिष्यामीत्यागतवान् ।

श्रीनिवासः अनतिहृष्टं देवर्षिमनुज्ञाप्य यावन्नारायणपुरं गन्तुमिच्छति तावदेव युगपत्तोण्डिमाननृपालः कुमारश्चागत्य यथाविधि पूजितो श्रीनिवासमूचतुः । कृतसाहाय्येन देवेन भवितव्यं इति । तच्छ्रुत्वा श्रीनिवासस्तोण्डिमानं प्राह ।

सुतोऽग्रजस्येति जगन्निवासः पार्थस्य सेवामुररीचकार ।
भीष्मः परित्यज्य वसुन्धराशां वैचित्रवीर्यं नृपमाततान ॥

कुमारं प्रति ।

युधिष्ठिरः किं न विद्वां वरिष्ठो न तत्पितृव्ये धृतराष्ट्रतासीत् ।
धरासुतस्यापि धरापतित्वे कथं मनीषा -मसरत्यये ते ॥

उभौ प्रति ।

येषां मनीषास्ति धरान्वितत्वे तेषां न गोत्रान्वितत्तेति चित्रम् ।
ज्याकर्षणं ये बहुमानयन्ति कीनाशलोके गणनैव तेषाम् ॥
वस्वीशतैकस्य मतोशतेयमन्यस्य चेत्तर्हि समो विभागः ।
द्वयोर्विवादे सति चैवमेव बुधैर्विभज्या वसुमत्यमेया ॥

इति । ततश्च तावुभावपि दुराग्रहग्रस्तौ ।

अयं कुमारः सच शक्तियुक्तो राज्ञः सुतोयं स बुधत्वमेति ।
अयं तपस्वी स च धर्मविद्याविचक्षणो द्वावपि मे समानौ ॥

---

१ धर्तं राष्ट्रं येन तद्भाव. । पक्षे धृतराष्ट्र इति नाम दुर्योधनपितुः । २ दुर्वीत्राणयुक्ता पक्षे वैरीस्यस्थितित्वम् । ३ ज्याधनुर्गुणः पृथ्वी च । ४ यमालयलोके स्त्रीवल्लभमूहे च । ५ वसुमति शब्दस्य समासविभागे 'वसु-मति' इति मतानीति हेयम् । ६ पञ्चाननः पक्षे सामर्थ्ययुक्तः । ७ बुधः ज्ञानी ग्रहश्च ।

इति पद्मावत्योक्तश्लोकाभिप्रायं च विदित्वा पुनः प्राह ।
यद्यस्मात् खेदयितुं युवयोः समीकमेव हितम्भवति तर्हि ।
अहं चैकतश्चक्रमेकेत्र बुद्ध्वा इदानीमपि स्यात्तथैव व्यवस्था ॥
नरं कौरवश्चापतुर्हर्षमुच्चैं यथेच्छं स गृण्हातु भागं स्वकीयम् ॥
इत्येवमुक्तवति देवे ।
गृण्हश्चक्रं तोण्डिमानो नृपालः प्राप स्थानं स्वं तथा हृष्टरूपः ।
तद्वदेव राजहंसं मुदाश्वः स्वीकृत्यागात्स्वां पुरीं राजपुत्रः ॥
ततश्च ।

हस्त्यश्वपत्तिरथघोषविमिश्रभेरी-
भाङ्कारपूरितदिशावलयान्तराला ।
स्वैः स्वैः परं परिवृढैः परिपाल्यमाना
सेनाद्वयी समरभूमिमुपाजगाम ॥

तदा कुमारोपि भुजावलेपान्मौर्वीसनाथीकृतचापदण्डः ।
किरञ्छरान्सर्पसमानरीणां बभूव भीष्मोपि विचित्रवीर्यः ॥
शुभ्राश्वयुक्स्यन्दनगः किरीटी मनोरथाग्रार्पितकसशत्रुः ।
हरिद्वनं प्राप स तोण्डिमानो रणक्षमां स्मारितपार्थचर्यः ॥
सम्मर्दं पति गगने सुराङ्गनानामुत्तुङ्गस्थलमनवेक्ष्य नारदोयम् ।
वीरौघामतिमपराक्रमं दिदृक्षुः स्वर्योषा गुरुकुचमारुरुक्षुरासीत् ॥
अथ तस्मिन् व्यतिकरे काश्चिद्वेत्रपाणिस्तोण्डिमानभूपालमवदत् ।

---

१ भीष्म पाण्डव पितामह. भयङ्करश्च । २ विचित्रवीर्यं भीमश्च पु
विचित्रं वीर्यं पराक्रमो यस्य ३ रणभूमिम् ।

वीरावेतावानिरङ्गावतीर्णौ कृत्वा युद्धं विग्रहत्यागकामी ।
एकः शत्रोः खड्गपातादथाग्रे योधाभावादन्य इत्येष भेदः ॥
रिपोः शराघातविभिन्नमूर्धा दन्तावलोयं विलुठन् पृथिव्याम् ।
गुरुप्रहारोन्मथितस्य तस्य क्रौञ्चस्य लीलां वहतीति मन्ये ॥
न केवलं वर्णित एव राजन् वैशाखवो नीरद भाव माप ।
किं तु प्रभो वैरिभुजप्रमुक्तमहागदाभग्नरदत्वतश्च ॥

अहह ।

सेनापतिः संयति लब्धलक्ष्यो जित्वारियूथं सहसा प्रभग्नः ।
पलायमानो यदसौ विचित्रं सेनाविहीनोप्यभवच्च मूढः ॥

इत्येवमुक्त्वा संवृतवचसि तस्मिन् । सेनापतिभङ्गश्रवणकोपेन कलिततापेन तोण्डिमानभूपेन ।

आकाशि चक्रं यदनेकधारं ज्वलज्ज्वलच्छ्रीमदनेकधारम् ॥
कर्तुं ययौ सर्वविपक्षपातं तत्तोण्डिमाने कृतपक्षपातम् ॥
अनन्यधार्यं प्रसमीक्ष्य चक्रं तत्तापितं चापि कुमार चक्रम् ।
सुदर्शनं घोरतरं स देवो बभार वेगात् किल वासुदेवः ॥

ततश्च ।

निजायुधप्रतापेन जगाम वसुधां हरिः ।
युक्तस्वभक्तरागाढ्यो बभारापि च मूर्छनाम् ॥

तस्मिन् व्यतिकरे युद्धोत्सवदर्शनभङ्गदुःखमस्माकं दैववशात् प्राप्तमिति अभिनयति खेदमुद्रां भगवति नारदे हाहेति क्रन्द-

---

१ देहत्यागेच्छु युद्धत्यागेच्छुश्च । २ क्रौञ्च॰ कुमारशत्रु । ३ हस्ती । ४अरदत्वम् मेघत्वं च ।

ग्सु नारायणपुरनिवासिजनेषु सपरिवृढा सेनायुगुली भीतरणव्या-पारद्गुराग्रहा तथाविधस्य श्रीनिवासस्य चरणमूलमुपागमत् ।

वाहिन्येकैव गङ्गाख्या पादे तस्येति विश्रुता ।
इदानीं वाहिनीद्वन्द्वामिति चित्रीयते मनः ॥

अथ विविधप्रयत्नेन प्राप्तप्रबोधः पौरवृद्धैः सह संमन्त्र्य सम्यं विभज्य तदायम् । तोण्डिमानकुमारी तोपयन् प्राप्तराज्यौ द्वावप्युपच्छद्य पद्मावत्या सह भोगीन्द्राचलं प्रस्तुदचलच्छ्री-निवासः ।

कण्ठे कण्ठीरवाख्यां प्रतिकलमधुरां बिभ्रतः सूरिचूडा-
रत्नस्यान्ते वसन्त्यः कलयति कविता गद्यपद्यावबद्धाम् ॥
तस्य श्रीश्रीनिवासप्रभुवरविरचिते वेङ्कटेशस्य काव्ये

मुकुटललामावलीनीराजितचरणयुगलश्रीमद्वेङ्कटाध्वरिविरचितायां श्रीनिवासविलासाभिधशालिन्यां चम्प्वां उत्तरविलासे पञ्चमोयं उल्लासः ॥ ५ ॥ समाप्तोयं ग्रन्थः श्रीवेङ्कटेशप्रसादात् ।